# PREFACE

Sometime in September 1962, Shri P P alias Annāsāheb Joshi of the Sānskrtic Samiti Brahmana Sabhā, Girgaum, Bombay 4, casually told me that the Sabha intended to get the popular Marathi play 'संगीत संशयकल्लोळ' rendered into Sanskrit for the purpose of staging the same As I had leisure at the time, I decided to try my hand at the job and completed the translation of the great stage-success by the late Natyacarya Govind Ballal Deval It was revised subsequently and in the matter of effecting necessay changes Shri Daji Bhatavadekar rendered valuable help He kept his experience of the Sanskrit stage of the last several years entirely at my disposal Rendering the songs was a difficult task for me as I lacked in the necessary equipment in the art and science of music so essential in being able to do justice to the original Shri Madhavrao Kundale, Shri Atmaram Thatte and Shri Balasaheb Tikekar tutored me with the result that I rendered the thirty-one songs preserving the original mode of singing the same as best as I could Shri Balasaheb Mate and Shri Suresh Haldankar were kind enough to spare for me enough time, in spite of their very busy programme so as to enable me to give the finishing touches to the songs thus composed Shri N K Mate V J T I and Prof N N Bhagwat Ismail Yusuf College, Jogeshwari took a personal interest in helping me out of the difficulty 'दहति च मनो नितान्तम्' I owe to the former Prof N N Bhagwat's suggestion that the last line of the song beginning with सुकान्तचन्द्रानना should be कुटिलकुन्तला, सरलनासिका, नलिनदलनयना, I have accepted, though I could not

incorporate it in the printed text The entire song धन्यमहं सुभगतम is Shri Daji Bhatavdekar s composition

To Shri Ramesh Kher I am thankful for the help he rendered in checking the manuscript copy of the text of the play before it was sent to the press. Shri B K Limaye a पूर्वसूरि in the field of translation with the rendering of the Gujrati पुराविवृत्त into Sanskrit to his credit spared time to go through the translation and check the same from the point of view of grammar I sincerely thank him for the kind help he has given me. The members and volunteers of the Brahmana Sabha were uniformly kind to me throughout the period of over three months spent in making preparation for the publication and the staging of the play To Shri R G Deval son of the late Natyacharya G B Deval I am thankful for having given me the rights of publication and staging of the Sanskrit सङ्गीत संशयकल्लोलम् My experience has convinced me that a play is देवानां कान्त क्रतु चाक्षुष ' where so many persons contribute their very best to the यज्ञसम्भार The highest quota has come from Shri Daji Bhatavdekar Director—I would prefer to call him संस्कृत-नाट्याचार्य—and Shri P P Joshi the Producer of the play But for them my translation would have remained with me in the form of a manuscript. I wonder whether I would have completed the same if the encouraging assurance that it would be staged by the Sanskritic Samiti of Brahmana Sabha were not there. The Staff of the Rashtravaibhav Press deserves sincere thanks for the help given in printing the play

I must draw attention to the fact that I have literally rendered the phrases used by रेवती and कृत्तिका to refer indirectly to आश्विनश्रेष्ठिन् and फाल्गुनराय respectively (अस्मात्कमेते एते etc) पट्टिका, अवदशा have been accepted as the equivalents of 'सटवी' and 'अवदसा', respectively Words printed just before the text of the songs into brackets are mere reproductions of the original such as (जाव मोरे बैया) and indicate the mode of singing the songs There could of course be no translation of the same. चतुःकोटिका has been made to signify 'frame' (of a photograph) I hope that the translation will serve the purpose of acquainting non Marathi speaking lovers of drama with one of the most successful Marathi plays Though Phalgunarāya originally was a 'foreigner', the late Shri G B Deval has given him such a local habitation, that had it not been for the author s statment to that effect, readers and spectators would not have even suspected the character as also others to have been adopted from a western play Craving the indulgence of readers and spectators for such imperfections as may have remained, I offer the सङ्गीत-संशयकल्लोलम् to the lovers of drama for being judged by them To adapt a phrase of the कविकुलगुरु, 'भाग्यायत्तमतः परं न खलु तद्वाच्य जनैर्मादृशैः ।' इति शम् ।

F/74, Lokmanya nagar, Bombay 16 — **R R Deshpande.**

---

## सङ्गीत संशयकल्लोलान्तर्गतानां गीतानां वर्णानुक्रमशः सूची ।



---

## सङ्गीत संशयकल्लोलान्तर्गता आभाणका ।

---

## शुद्धिपत्रम् ।

| पृष्ठाङ्क | पङ्क्ति (उपरिष्टात्) | शुद्धम् |
|---|---|---|
| १६ | १९ | समीचीनमेतत्सद्वृत्तम् । |
| १८ | २ | सर्वस्यास्य स्फोटसन्तानस्य पुरत |
| २० | १४ | मुहूर्ता प्राक् देवदर्शनार्थं बहि |
| ३४ | ३ | स्वैरसञ्चार । |
| ३७ | २४ | तापयते |
| ३९ | १४ | वितथमार्जवम् । |
| ४० | १८ | अस्मिन्नेव |
| ४८ | ११ | आज्ञापयतु |
| ४६ | १३ | इतस्ततोऽवलो |
| ५६ | २४ | न वा |
| ५७ | २७ | अन्तिमस्तावदेक |
| ६१ | ९ | क्लेश |
| ६२ | ५ | दुर्बलता |
| ७२ | २ | असम्भाव्यमेवैवत् । |
| ८३ | ७ | अभ्यन्तर |

श्रीः

ब्राह्मण सभा—सांस्कृतिकसमितिद्वारा संङ्गीत-संशयकल्लोलम् इत्यस्य नाटकस्य प्रथम प्रयोगः रविवासरे ८।१२।६३ दिनाङ्के सायंकाले चतुर्वादने षण्मुखानन्द-सभागृहे 'किंग्ज सर्कल' विभागे अभिनीतः।
प्रयोगस्य अस्य निर्मातृ-दिग्दर्शक—कलाकाराः सहायाश्चः—

निर्माताः — प्रभाकर पा. जोशी
दिग्दर्शकः — कृष्णचद्र भाटवडेकर एम्. ए.

**कलाकाराः**

| | |
|---|---|
| विरागी | वासुदेव जोशी |
| फाल्गुनराय | दाजी भाटवडेकर, एम्. ए. |
| भादव्यः | सीताराम डोंगरे |
| आश्विनश्रेष्ठी | बाळासाहेब टिकेकर, बी.एस्सी. एल्एल्.बी. |
| रेवती | सौ. निर्मला गोगटे, एम्. ए. |
| कृत्तिका | सौ. मंगला पर्वते, बी. ए. |
| रोहिणी | कु. मालिनी लेले |
| स्वाती | कु. शशी बापट |
| वैशाखश्रेष्ठी | श्री राम बापट, बी. ए. |
| भृत्यः | श्री. वामनराव अभ्यंकर |
| अनुराधा | कु. तारा आठवले |
| मघा | सौ. शान्ता आपटे |
| सङ्गीत सभा गायकः | श्री. अरविन्द चाफळकर, एम्. ए. एल्एल्. बी. |

**सहायकाः**

| | |
|---|---|
| वाद्यवादकौ | माधव कुंडले, आत्माराम पत्ते |
| रंगभूषाकारः | नाना जोगळेकर ( मेकअप् सर्व्हिस ) |
| वेषभूषाः | कमार्शियल स्टोर्स ( भुलेश्वर ) |
| छायाचित्रकारः | राजदत्त फोटो स्टुडियो |
| नेपथ्ययोजकः | श्री. भार्गवराम पागे ( मु. म. सा. संघ ) |

रङ्गमञ्चव्यवस्थापकाः श्री. दादा शिरे, सौ. जोशी, सौ. सभे, गोरे, राजाभाऊ शिरे, पां. भि. जोशी, वैद्य, दातार, सहस्रबुद्धे, मराठे, पडके, केळकर इत्येते तथा ब्राह्मणसभायाः स्वयंसेवकाः।

## नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम्।

मूल–मराठी–लेखक :



कै. नाट्याचार्य गो. ब. देवल

अनुवादकार :



प्रा. रं. रा. देशपाण्डे

दिग्दर्शक :



श्री. दाजी भाटवडेकर

निर्माता



श्री. प्रभाकर पां. जोशी



प्रथमा पङ्क्ति । तिष्ठन्त (वामत.) :—श्री. राजा खिरे, पा. भि. जोशी, वासुदेव जोशी, वा. रा अभ्यंकर, सीताराम डोंगरे, दाजी भाटवडेकर, बाळासाहेब टिकेकर, राम बापट, माधव कुडले, आत्माराम थत्ते, द. वि. वैद्य, दादा खिरे.

द्वितीया पङ्क्ति । (वेत्रासने उपविष्टा)—रा. रा गोरे, सौ मालती सप्रे, श्री मा. र सप्रे, प्रा. र. रा देशपांडे, श्री. प्र पा. जोशी, सौ. शकुंतला जोशी, सौ मंगला पर्वते.

तृतीया पङ्क्ति । (अग्र उपविष्टे)—कु तारा आठवले, कु. मालिनी शेले.

अथ

# सङ्गीत-संशयकल्लोलम् ।

## प्रथमोऽङ्कः ।

### प्रथमः प्रवेशः ।

नान्दी ( आलनची )

सौख्यसुधां वितरेत् । चिरनवाम् । सदाशिवो वः ॥
हिमगिरिजाधवः साधुजनानां तापमपहरेत् ॥ ध्रु० ॥
करेण शीर्षे दधाति गङ्गाम् । मत्सरभावात्सती कोपयति ॥
'अशिवे ! पश्यसि वद कथमिन्दुम् ?' पृच्छन् कुप्यन्पातु वः शिवः ॥१॥

साकी

बलवत्पन्तगोविन्देन हि सङ्गीते सुनिबद्धम् ।
संशयकल्लोलाख्यनाटकं हास्यरसेनाञ्चितम् ॥
प्रयोगतां नीतम् ! पश्यत शृणुत ॥ स्थिरचित्तम् ॥ १ ॥

( नान्द्यन्ते प्रविश्य )

विरागी—

गीतम् ।

हृदि हि धर त्वं बोधं सत्यम् । संसारे शान्तिनिर्झरम् ॥ ध्रु० ॥
संशयशठः पिशाचो महान् । स्वीकुरु तं न च क्षणमात्रम् ॥ १ ॥
निशाचरी कल्पना जडा । ग्रसेत्कण्ठमिति महद् भयम् ॥ २ ॥
बहुरूपा सा जनवाणी । यदि स्वीकृता, सकलो घातः ॥ ३ ॥

ननु अस्माक कार्तिकनायस्य दीपोत्सवार्थे 'द्रोणीमित तैलं दास्यामि' इति प्रतिश्रुतमासीत्तत्रभवत्या—

फाल्गुनरायः—[ नेपथ्ये ] अपेहि ! अपेहि इतः । न किंचिदपि लप्स्यते ।

विरागी—भोः कस्मादकारणमेव अभिपत्यते ? प्रतिश्रुतमासीत्तत्रभवत्या । तदागतोऽस्मि ग्रहीतुम् ।

फाल्गुनराय—[ नेपथ्ये ] दम्भैकशील ।—

विरागी—यदि नेच्छति भवान्दातुं न प्रयच्छतु । कुतस्तु अहेतुकमेव वदिद्यते ? एषा हि संशयवृत्ति निवर्गद्दि दानादिकं कारयति च पुण्यक्षयम् । किं बहुना, दैनदिने व्यवहारेऽपि, अयं संशयपिशाचः सुखं कलुषयति । काम नाचरतु दानादिकं भवान् । साधयाम्यहम् । आत्मनोऽपि कल्याणार्थं स्मरतु भवान् मद्बोधम् ।

हृदि हि धर त्वं बोधं सत्यम् । ( निष्क्रान्तः । )

फाल्गुनराय—[ प्रविश्य ] रे दम्भाऽमन !

गीतम् ।

श्रामय मा कण्ठं स्वम् । नास्ति तृषा बोधरसे ।
दम्भिन्नपेहि मा स्या मुहूतम् ॥ ध्रु० ॥
यूयं न साधवः खल-चोर-धूर्त कितव-शठ-कठोराः ।
व्यसनान्धौ मज्जथ हि । श्रद्धाद्रु खापुरुष न् ॥ १ ॥

तदपगच्छ । आम्, ज्ञातं मया कस्यापि सदृश मम भार्याया प्रापयितुं, पत्रं पत्रिको वा कस्यचित् तस्यै दातुमागतः भवेदयं कश्चन जनः । अयं सापि नूनमतिमात्रं युक्तिनिपुणा एव । अद्य कथयति 'मातृभगिन्या गृहमहं गच्छामि' इति । श्वः पुनर्भणिष्यति 'अद्य प्राप्तो भगिन्या सदेशः' इति । पुनः क्वचित्कथयेत् 'आहूताऽस्मि पितृभगिन्या' इति । एवं प्रत्यहं नवनवा युक्तिं योजयन्ती आस्ते । सापि तु न तासामेकयापि अतिविघास्ये, इति सम्यग्जानातु सा । अनेनैव हेतुना बहिर्विशालपुरात्, अस्मिन् निजे निवासे निवस्तुमागतः । ननु चिन्त्यताम्, नगरे वसन्, एतादृशीं भार्यां, कियन्तं कालं परित्रायेयं ? तत्रापि, इदानींतने काले, काक-बक शठ-चेट विगादीनां नैकवर्णानां विलासैकपराणां महता ओघेन इव सकुलीकृतं खल्विदं नगरम्. अत्र हि रामदासा, हरिदासा, पुराणिका, वेदान्तिन ब्रह्मचारिण इति सर्वे परस्परं स्पर्धमाना सन्ति यात्र्ये । तत्रात्र उपायान्तरम् । यन्मया विहितं तदेव समीचीनतमम् । न तया बहिर्गन्तव्य, न कनचित्तया सलपितव्य वा । एतदर्थे मम प्रहरित्वं तावदनिवार्यं जातम् । तत्तु न केवलं सह्यम् अपि तु वरणीयमेव । तत्किमवमेकाकी स्याम् ? इमा तावदाहूय, दमयन्तीचरित्रं पाठयामि ।

अयि! अस्तस्तत्र चन्दनपेटिकायाम्, उपरिष्टादेव पुस्तकमेकं वर्तते। तत्तावदानय। अयि! अपि शृणुषे नु? भो कथं प्रतिवचनमपि न करोति? (द्वारं गच्छन्) तत्किं मौनव्रतमधुनावलम्ब्यते? अथ, न अत्रापि दृश्यते। भो क्व नु खलु वर्तसे? (इतस्ततोऽवलोक्य) नूनमपसृता! निपुण विप्रलब्धोऽस्म्यनया। माधव्य, अरे माधव्य, माधव्य! एहि शीघ्रम्! फाल्गुनराय! कियता तर्हि सम्प्रति शङ्खध्वनिं सुचिरम्। अरे माधव्य! आगतो वा न वा? अयमपि शठः, तस्या एव सहायः संवृत्तः, इति भाति। (प्रविशन्तं माधव्यं प्रति) किं रे! क्वास्ति सा?

माधव्य —पश्चाद्द्वारेण कार्तिकनाथमन्दिरं गता।

फाल्गुनरायः—पश्चाद्द्वारेण! तद् माधव्य! गच्छ शीघ्रम् आनय गृहकारं, पूरय च द्वारावकाशम्। अद्यप्रभृति एष मे नियमः, यद् द्विद्वारके गृहे नैव वस्तव्यम्। यावदस्मिन् द्वारे उपविष्टः, तावन्निर्गतासौ द्वारान्तरेण तेन। सप्तदशद्वारे त्रयस्त्रिंशद्गवाक्षे च गृहे ईदृशे कथं नेत्राणां शतमपि पर्याप्तं भवेत्? किमुक्तं त्वया-'कार्तिकनाथस्य मन्दिरं गता' इति?

माधव्य —आम्, भर्तः!

फाल्गुनरायः—अपि सुवसना सालङ्कृता च गता?

माधव्य —तन्नाम कथम्? यथानित्यं गता।

फाल्गुनराय —अपि तया धारितानि सर्वाणि भूषणानि? अपि च परिहितं तयिषाद्धिनं दुकूलम्? आसीत्नासिकायाम् उज्ज्वलं मौक्तिकभूषणम्? अपि रुचिरमुत्तरीयमपि परिहितमभूत्?

माधव्य —अथ किं, भर्तः!

फाल्गुनराय —यथावदेवैतत्सर्वम्। किमितोऽप्यधिकमिष्येत?

माधव्यः—ननु, अन्यदेव विकल्पितं भाति भवता चेतसि। यदि इष्टम्, उद्धतोऽयमिति कृत्वा, ददातु चपेटिकां कपोले भर्ता। किन्तु, भर्तः! ईदृशी सुस्मातिसुस्मा स्वामिनीगता पृच्छा, न युक्ता प्रतिभाति। भर्तः! भद्र सार्वकिङ्कर, तथापि मन्ये सांप्रतं स्वामिन्या अनुरक्त इव स्वामी।

फाल्गुनराय—यदि अनुरक्तोऽभविष्यं तदा कथं सा इत्थं दुर्ललिता समभविष्यत्? यदैव तयाकथितं 'एष मे पतिः परां स्वैरतां प्राप्तः', भग्न इव

कुसुमम्, मामभितः नृत्यन्नास्ते ' इति, तदैव अपशित मर्यादाया अवगुण्ठनं तथा, आरब्ध च स्वैरं नर्तनम्। यदि अहमेव आदितः उग्रतामवलम्ब्य, उत्थिता पादप्रहारेण, उपविष्टो च ता मुश्यायातेन नियत सममार्गविष्यम्, तर्हि कर्बुरा घोटिकेव मे, सा मुखरन्त्रिताऽभविष्यत्। मया पुनश्चिन्तित, ' सुशिक्षिता, अभिजनवती चेयम्, नैव वाममार्गमनुसरेत् ' इति। परन्तु, किं शिक्षणेन! अपि जातु वाद्यमलङ्करणम्, आन्तर रूपं परिवर्तयितु प्रभवेत्! कर्करिका नाम चषककर्परिकैव।

भादव्यः—ननु क्षम्यतां मेऽपराध। स्वामिन्यां तु न तिलमात्रोऽपि दोषः, य निन्दामर्हति। यत्पुन वाममार्गानुसरणम् इति किंचिद् भवता निर्दिष्टम्, ईशा एव तज्जानाति।

फाल्गुनराय.—न तस्या तिलमात्रोऽपि दोषस्त्वन्मतेन। ' दोषराशिरेव सा ' इति तु मे मतम्। तत्किमत्र करणीयम्? भादव्य! नेद कुत्रचिद्देश-नीयम्। गृहच्छिद्राणि ह्येतानि। त्व तु मम पुरातनः सत्यशीलो विश्वसनीयश्च भृत्य। अत मन्त्रये त्वया सह। पश्य तावत्, मम हृन्मर्माण्येव तया निकृत्तानि। मुखं च मे कज्जलावलिप्त कर्तुमुद्यता सा।

भादव्यः—मा मैव भर्त! हा धिक्! तन्नाम देवता एव कुपिता स्वामिन्यै, यद् भर्तृमनसि, ईदृश्यो विपरीताः कल्पना. सभवन्ति। यद्वा तद्वा प्रमाणं भवतु, यदाश्रित्य भणितमेतद्भवता। पूजाकुसुमस्पर्शपूर्वक तु भणामि ' वितथ, तुषकण इव तुच्छ. एव, भवत. एष सशय ' इति। न सत्यस्य लेशोऽपि तस्मिन्।

फाल्गुनराय —किमात्थ ' निराधारोऽय सशय ' इति? अरे! तस्मिन् दिने, ज्येष्ठिना विवाहोत्सवे, वधूवरयात्राया अवसरे, यानि तस्याश्चेष्टितानि, प्रत्यक्षीकृतानि तानि सर्वाणि मया। कल्पितादेव कारणात्कृतश्चित्सहसा हसितव्यम्, मामवलोक्य नासिकाभङ्ग कार्य, वाद्यविशेष प्रदर्शनपुर सर च इतस्तत. अटितव्यम्, पुरुषाणा गात्राणि स्वगात्रे सघट्टयन्त्या चलितव्यम्, एवमात्मक: सहस्रक खलु तल्लीलानाम्! विवाहादनन्तर कानिचिद्दिनानि, तथा मुग्धाऽऽसीत्, यथा मयूरपिच्छनेत्रसदृशेन परपुरुषनेत्रेण न क्षणमपि वियोजयति स्म नेत्रम्। इदानीं तु न जाने कुत्र

गता सा सभ्यता, सा मर्यादा, अस्तमिता वा सा लज्जेति। किं बहुना, मदनुज्ञां विना, किमर्थं सा कार्तिकनाथं गता?

भाद्रव्यः—बहुषु दिवसेषु नावसरः प्राप्तस्तत्र गन्तुम्, इति गतास्युः। तत्र का हानिः?

फाल्गुनरायः—'तत्र का हानिः?' महामूर्खोऽसि। न किंचिदपि जानासि। न तावद्देवदर्शनं कर्तुं, किन्तु देवालयेऽस्मिन् समये परिभ्रमद्भ्यः शठेभ्यः आत्मानं प्रदर्शयितुं, सा गता। अपि न गृहे देवाः? ईदृशीभिस्तु नारीभिः सकलप्रसाधनपूर्वकं देवालयगमनमेव काम्यते। सर्वे धूर्ताः जाल्माश्च अस्मिन्मुहूर्ते तत्र संमिलन्ति नु?

भाद्रव्यः—अन्यायः सुमहानन्यायः खलु क्रियतेऽयं भर्त्रा। यदि इयमेव निन्दा केनचिदपरेण कृता अभविष्यत्, तदा प्राणैरेव तं व्ययोजयिष्यम्।

फाल्गुनरायः—अरे शठ! मेलापक! किं तां धूर्तां कैतवशीलां भार्यां मे प्रशंससि? वेतनं मत्तः, सेवा पुनस्तस्याः?

भाद्रव्यः—भर्तः! इयं सा परित्यक्ता सेवा। आज्ञापयतु भवान्। परिभ्रमेण यत्र कुत्रचित्पूरयिष्यामि उदरम्। यस्तु स्वामिनामिव शुद्धचरितां निर्मलां च पत्नीं कैतवेन दूषयति, न तस्य भर्तुः अन्नकणमपि भक्षयिष्यामि। दीयतां तर्हि मद्वेतनम्। सोऽयमस्मि प्रस्थितः। (आस्तरण-जलभाण्ड-कम्बल-वासः-प्रभृति संग्रहीतुं प्रवर्तते।)

फाल्गुनरायः—(स्वगतम्) न खलु संप्रत्येव धूर्तोऽयं तर्जनीयः। किन्तु, चाटुवचनेन अनुकूलयितव्य एव। यतः सत्यासत्यप्रत्ययं विना नायमुपजीविकां त्यक्ष्यति। अन्यच्च, मयापि तावत् किं प्रत्यक्षीकृतम्? अधुनापि कुतर्कविजृम्भितमेव इदं मे स्यात्। (प्रकाशम्) अरे! नाद्यापि मया निर्णीतम्-'इयं कितवा' इति। किन्तु, त्वमेव तावद्भण। अपि नैतानि दुर्लक्षणानि? स्त्रियो हि नाम्नैताः। न खलु प्रमदाः शिथिलीकरणीयाः-इत्येतावदेव भणामि। तन्निधेहि तत्सकलमपि यथास्थानम्।

भाद्रव्यः—(यथावत् स्थापयन्) आम्, एतद् भवतो वचनं समीचीनम्। भर्तः! कियान्मे बुद्धिविभवः? किन्तु विनैव चक्षुःप्रत्ययं, भवादृशानां महाशयानां संशयावलम्बनम्—

फाल्गुनराय:—(स्मित नाटयन्) अयि मूढमते! अपि सर्वमेतत्सत्यमेव मत त्वया! एतावन्त काल त्वन्मन एव समीक्षितुकाम एवमवदम्। तद्गच्छ। श्वान तावदितस्तत सचार्य आगच्छ। यदा च प्रत्यागमिष्यसि तदा कायान्तर किंचिद् अवश्यकरणीय समादिशामि।

भाद्रव्य:—एव भवतु। अयमह कुक्कुर सचार्य प्रत्यागच्छामि। (निष्क्रान्त।)

फाल्गुनराय —(त निष्क्रान्त ज्ञात्वा) ध्रुवमेतद् ब्रवीमि, पत्न्या मे धनमस्य दर्शितम्, येन प्रलोभितोऽयम्। भवतु तत्तथा। क्व तावदियं गतेति भणितमनेन-? कार्तिकनाथस्य मन्दिर नु? अञ्जसा तत्रैव गच्छामि, तां यथास्थितामेव च आकृष्य आनयामि। न यदि तां स्तम्भे बध्नीयाम् नामापि स्वक परिवर्तयिष्ये। किन्तु फाल्गुनराय! यदि पाणिग्रहणमेव ईदृश्या अवदशाया न अकरिष्य!

गीतम्। (शङ्का घसि घोर)

मिथ्याधी किमिव जाता? तिथिश्च वितथा पुरोहितधृता॥ धृता च या स्त्री सानघदाता॥ ध्रु०॥ महाकुलेन च दूरमोहितो॥ बाह्यसुशिक्षणरूपविस्मितो॥ बन्दितचरणा कृत्यामानयम्॥ १॥



## द्वितीयः प्रवेशः।

(तत प्रविशति स्वगत भाषमाण परिक्रामश्च आश्विनश्रेष्ठी)

आश्विनश्रेष्ठी—यद्यप्यह कर्तुमुद्यतोऽस्मि, तत्परमवृद्धोऽपि मे वैवाहभेविन न सफलम्। समीचीन न तस्यापि कमित यत, यदि राजमार्गे विहाय क्षुद्रयेव विमार्गमनुसर्तुकाम स्याम्, कथ तत्तस्य अनुमत स्यात्! किन्तु, किमत्र विधेयम्! पञ्चविंशतिवर्षमात्रवयसो यूतो मे तिस्रो भार्याः समनन्तरमेव पञ्चत्व गता। यथा जन कश्चिद् वल्लरीं रोपयति, सारजलादिना लालयति, सा च पुष्पफलधारिणी जायते, तदानीमव च रोगा कुतश्चिदकस्माद् विनाशमेति, एवमेव कल्पमितय मे दिष गतम्। अपान्ते, अतीव सत्रस्तोऽह जातकमानो भारतीय-ज्योतिर्विद्वरेभ्यो

माघमावेधराख्येभ्यो दर्शितवान् । जातके दृष्टिक्षेपमात्रेण उक्तवांस्ते 'मङ्गलो योऽस्तीवानिह भार्यास्थाने च व सर्वेषां पापग्रहाणां दृष्टि समायाता। अथात् न परिणीतया स्त्रिया भवतश्चिराय सहवास स्यात्। तस्मा खल्वात्मानमस्या विपदि पातयतु । यदि विघ्नान्तरेण विवाहो विहित स्यात्, तदैव सम्भवे स्त्रीसुखम्' इति । प्रतीतिश्चास्य तेषा जातकपठितस्य मे जाता, परित्यक्तश्च मया विवाहविचार । ज्योतिर्विदामादेशमनुसृत्य, सुवृत्तां गणिकावात्यस्य काचन अविवाह्य, तया सार्धं परिणीतस्त्रियेव, गार्हस्थ्यसुखमनुभविष्यामि, इति अध्यवसित च। गणिकाया मघाया व या रेवतीम् इष्टेभ्यो दशगुणितैरधिकैर्गुणैरन्विता प्राप्य दिष्ट्या वर्धे । प्राय, मासमेकं प्रत्यह तन्निवास गच्छता मया सुष्ठु परीक्षिता सा । न केवल तस्या न्यूनत्वोऽपि मया नावलोकित, प्रत्युत मादृशेन केनचित्सह परिणीतस्त्रीव यावज्जीव निवसन निश्चित्य विगत वर्षत्रय तया कौमार्यव्रतम् असिधारातीक्ष्ण समाचरितम्। तदिदं 'भवितव्यानां द्वाराणि भवन्ति सर्वत्र' इति यदुच्यते। ह्य, आवयोर्नि सकोच सल्प सवृत्त । 'निर्णायकवचन सशपथम् अनेव रमाकान्तस्य समक्ष दास्यामि' इति भणित्वा गता सा । तत्त्वतो धर्मदृष्ट्या यद्यपि गौण इवायं प्रकार, तथापि प्रेमसुखदृष्ट्या तावत्, आवयोरय युज्यमान सम्बन्ध प्रकृष्ट एव, इत्यत्र न कोऽपि सशय । (आकर्ण्य) अयि! 'रुम् झुम्' 'रुम् झुम्' इति कुतो विद श्रुतिमधुर शिञ्जितम्? अथवा किमनया पृच्छया? तस्या एव नूपुररञ्जितमिदम् । अहो! कथमस्या सहज पदन्यासोऽपि लयमनुरुध्यते? अहो महती पुन सुस्वरता नूपुरस्य! 'रुम् झुम्'! 'रुम् झुम्'! भो आगम्यताम्, आगम्यताम्, अयि तृषितचातक मेघमाले! आगम्यता स्वागत ते ।

गीतम्। ('लावणी' सरणीमनुसृत्य)

सुकान्तचन्द्रानना साऽऽगता भ्रूधनुरातन्वती ॥
कटाक्षखरशर निपात-भेदित हृदया गजगामिनी ॥
रदनपङ्क्तिरिह भाति मुखेऽस्या नून शशिकला ॥
[रदनपङ्क्तिरिह खण्डा शशिबिम्बस्य मुखे रोपिता ॥]
कुटिलकुन्तला, सरलनासिका, नेत्रे, नलिनीदले ॥

(तत प्रविशति रेवती।)

**रेवती**—साधु ! साधु ! अहो चारुता तानविलसितस्य । एतावन्तस्तावद्दिवसान् गोपायित इवासीदयं गानगुणः ।

**आश्विनश्रेष्ठी**—सङ्गीतदेवताया अप्राप्यमाण इव गूढः आसीत् । ननु अप्राप्य अवसरविशेषं, कथमसौ प्रकाशः स्यात् ?

**रेवती**—अपि प्राप्तोऽद्य उचितावसरः ?

**आश्विनश्रेष्ठी**—आम्, एवं भाति प्रसन्नादस्मान्मुखकमलात् ।

**रेवती**—कः खलु कस्यापि स्वाप्निकं नन्दनवनविहारं रुन्ध्यात् ?

**आश्विनश्रेष्ठी**—किन्तु, कः पुनः साक्षादुपगते नन्दनवने, स्वाप्निकेन विहारेण तुष्टः स्यात् ?

**रेवती**—अहो निपुणता प्रतिवचनस्य । ननु प्रासं प्रति प्रासमनुबध्य प्रवर्तते भाषणम् । कदाप्रभृति कविदीक्षया अनया दीक्षितो भवान् ?

**आश्विनश्रेष्ठी**—ननु यदाप्रभृति सद्गुणलावण्यजालेऽस्मिन्संसक्तः ।

**रेवती**—ननु पृच्छामि, कः खलु काव्यविषयः ?

**आश्विनश्रेष्ठी**—कोऽन्यः ? त्वं त्वद्यौवनम्, त्वल्लावण्यम्, त्वदीया गुणसम्पद्, तव हसितम्, भाषितं गतं, सकला त्वमेव ।

**रेवती**—तत्तावदास्ताम् । अतिप्रशंसनशीलाः खलु पुरुषाः । किन्तु, न अद्य आत्मप्रतिकृतिप्रदानं मे प्रतिश्रुतमासीद् भवता ? अथवा, 'वचने किं दरिद्रता ?' इत्यस्य नवावतार एव अयमपि ?

**आश्विनश्रेष्ठी**—अयि ! 'सति बिम्बे, किं प्रतिबिम्बेन ?' इति न दत्ता ।

**रेवती**—अपैतु तावद् भवान् । अलं सल्लापेन । (कोपान्मुखं परिवर्तयति । )

**आश्विनश्रेष्ठी**—साधु ! साधु ! इद नाम विभ्रमविलम्बितम् । सर्वथा कृतार्थोऽस्मि । तत् प्रतिगृहाण प्रतिकृतिमिमाम् । ( इति अर्पयति । ) तन्नूनं मदीयादपि महत्तरमेतस्या दैवम् ।

**रेवती**—( दृष्ट्वा सहासम् ) अपि भवतः इयं प्रतिकृतिः ?

गीतम् । ( जान मोरे चैना )

साम्यलवोऽपि न मुखे दृश्यते । नाम नन्वीर्यतां ललाटे । को
नु विलेखित इति बुध्येत ॥ ध्रु० ॥ मत्सन्निधे ननु चाटुमतः
प्रीतिचित्रकारिणीविलिखितं, मूर्ति-प्रतिबिम्बमेव सुभगम् ॥१॥



आश्विनश्रेष्ठी—तदिदं भवितव्यानां द्वाराणि भवन्ति सर्वत्र' इति यदुच्यते।

(पृष्ठम् ७)

आश्विनश्रेष्ठी—दर्शयतां दर्शयतां कुत्र तत्? येन तद्धस्तचित्रितैव या तव एका प्रतिकृतिः मत्संनिधौ भवति, तां ते दर्शयामि। ननु दर्श्यताम्।

रेवती—अयि केयं त्वरा? दृश्यतामियम्, हृदये मया सुस्थापिता।

आश्विनश्रेष्ठी—अहो नैपुण्यम्। तदधिगतं मया उत्तरम्। एहि तावत्, श्रीरमाकान्तस्यैव समक्षं करदानग्रहणविधिं सुमङ्गलं परस्परशपथवचःपुरस्सरं सानन्दोत्साहं संपादयिष्यावः।

रेवती—किन्तु, अस्त्येकं कथनीयं मे भवते। तन्नित्यमेव मनसि धारयितव्यं भवता।

आश्विनश्रेष्ठी—किमेकेन? कथय सहस्राणि। किमिदानीं कार्यान्तरम्? त्वया वक्तव्यम्, मया च अनुष्ठेयम्। कथय तर्हि। निवेदय शीघ्रम्। ननु सत्वरम्।

रेवती—इदमेव कथनीयम्, यत्स्वभावो भवतः ईषत्त्वराशीलः। निरालम्बमेव कल्पनासौधान् विरचय्य, यदि मद्विषये निरर्थकमेव संशयं भवान्—

आश्विनश्रेष्ठी—सुष्ठु मया अवगतम्। मा तावत् मुखकमलमेवं मुकुलीकुरु। अथ ब्रूहि, कथं त्वां प्रति संशयः संभवेत् इति।

रेवती—अस्मिन्नेव तु मङ्गलसमये सूचयामि यन्ममापि स्वभावः ईषत्परिहासशीलो बालसदृशश्च। तद्यदि कदाचित्—

आश्विनश्रेष्ठी—अवगतं तत्। सत्यम् ईदृश एव स्वभावो रुचिरो भवति।

रेवती—अपि च अल्पोपमत्सरा, ईषन्मानिनी, ईषत्कोपना चास्मि। अतः—

आश्विनश्रेष्ठी—कोऽत्र दोषः? एते खलु गुणाः सरसतां जनयन्ति गार्हस्थ्ये। इष्टं। अपि समाप्तं निवेदनम्?

रेवती—न समाप्तम्। अस्ति शेषोऽल्पमात्रः।

गीतम्। (हमसे नजरिया)

प्रथमं विरमतां सकलविचारः॥ निष्कपटतां भजत॥ ध्रु०॥
धनाढ्यवंशोऽभिजातो भवान्। हीनकुलां मां कथमिव वृणुयात्?॥१॥
निःस्वजनीना हसन्ति सर्वे। जाति धर्म-कुल-मानापगणनाम्॥२॥
विवाहबन्धः सकृद् बध्यते। पुनः कदापि न मोचयिष्यते॥३॥

आश्विनश्रेष्ठी—ज्ञातं मया। एहि तावत्। (देवतामूर्तेः पुरस्ताद् गत्वा)

रेवती— गीतम् । (निपटनिडर)

मङ्गलेऽङ्कि तनुहृद्धनदानमर्पये । सहाचरणसूचनाय करे करं ददे ॥ ध्रु० ॥ पत्नीत्वं नीत्वा मां, वितर धन्यताम् । आर्यामित-सेवामथ शपथेन घोषये ॥ १ ॥

आश्विनश्रेष्ठी— पद्यम (भय हैं नवें)

करोऽयङ्करे सुधृतः शुभाङ्कि । सुदिने रमाकान्तापरोक्षम् ॥ ध्रु० ॥
सुखदा सदा, मत्स्वामिनी त्वम । गृहसम्पदं, सकलां वृणीष्व ॥१॥

परन्तु अस्य सर्वस्य साफल्यपदमेवम्—

रेवती—मा मेवमुक्त्वा । दृश्यता कोऽपि तत आगच्छति । अद्य रात्रौ सत्यनारायणस्य पूजा अनुष्ठेया । सत्वरं तर्हि आगम्यताम् । अहं कार्तिकनाथं गत्वा गृह प्रति निवर्ते ।

आश्विनश्रेष्ठी—अप्यागमिष्यामि कार्तिकनाथं यावत् ! येन दम्पती एव आवां दर्शन करिष्यावः ।

रेवती—अहो प्रमादः । (स्नेहसन्देहपूर्वं निष्क्रान्ता ।)

आश्विनश्रेष्ठी—अहो प्रमोदः ।

गीतम् (आज अंजन)

धन्यमहः सुभगतमं, मम पूर्णा कामना
सुदिनं कुलदैवतं, सुफलिताऽऽराधना ।
लाभः स्याद्यस्या इति, लोभ आसीन्महान्
युवतिराप्ता मया, सैव मधुरानना ॥

(निष्क्रान्तः ।)

---

## तृतीयः प्रवेशः ।

(फाल्गुनराय-निवासस्य पुरस्ताद्वर्तमाना रथ्या । )

(ततः प्रविशति कृत्तिका । )

कृत्तिका - एतैरनवलोकिता लघुलघु देवदर्शनं कृत्वा प्रत्यागताहम् ! किन्तु मुदैवमेव तन्मन्येत, यदि एतैरदृष्टं किंचिन्न गृहे आचरितं

स्यात्। अन्यथा "राधितो मन्दिरे भार्यया रामः। साधितस्तावद् भर्त्रा गृहे कामः।" इति यदुच्यते, तदनुभूयेत। अम्मो! अपिहित खलु द्वारम्। (द्वारमाहत्य रोहिणि! रोहिणि! अपावृणु द्वारम्। धिक् हतकाः! न काचन प्रतिवचनमपि करोति। तत्किं नाम आरब्धमेते-रभ्यन्तरे? मृग्यमाणश्चोरोऽनायासेन हस्ताभ्यामागतप्रायो भाति। किन्तु, कथं द्वारमिदमपावरणीयम्? अयि चित्रे! रोहिणि! ननु मृता इव सर्वाः। किमधुना विधेयम्? द्वारमपावृणुत। ननु भणामि, द्वारमपावृणुत। अथवा किमत्र स्थित्वा आक्रोशेन? तत्रैव गत्वा निगूढात्मान स्थातव्यम्। (निष्क्रान्ता।)

(रोहिणी स्वाती च द्वारमुद्घाट्य बहिरागच्छतः।)

रोहिणी—नात्र तावत्कोऽपि। कस्तर्हि द्वारमाघ्नन् स्थितः? स्वाति! अपि दृष्टं त्वया? एवंविधाश्रमत्कृतिमयाः संशयपिशाचचेष्टा प्रवर्तन्तेऽत्र। यत्सत्यम् उभावप्येतौ ऋजुकौ, किन्तु, संशयवेतालेन सममेव बाधितौ। आस्तां तावदेतत्। तत्कदा पुनरागमिष्यसि? ननु तिष्ठ मुहूर्तम्।

स्वाती—मा तावत्। दीर्घः खलु अवधिर्मम आगतायाः। साधयामीदानीम्। अन्यथा उच्यत एव-दास्यौ आवाम्। नियोजितं सर्वं यथावन्निर्वर्त्यं यदि शक्यम्, तदा इतरत् आचरणीयम् इति। अपि च रोहिणि! किं मयैव वारंवारं त्वद्दर्शनार्थमागन्तव्यम्? सकृत् त्वं कुतो नागच्छसि तत्र?

रोहिणी—अहं नाम त्वद्दर्शनार्थमागच्छेयम्? अयि! कुतः खलु मम एतावद् भाग्यम्? तथा कठोरा खलु मे स्वामिनी, यन्न इतस्ततश्चरितुमपि अवसरः प्राप्यते। वाक्प्रवाहस्तस्यास्तुण्डात् प्रवर्तमान एव सर्वदा भवति। 'इदं कुरु। तद् विधेहि। तन्निधेहि। एतदानय। गच्छ उपरितनीं भूमिम्। प्रमृश' इति। निर्विण्णास्मि खलु जीविकयानया।

स्वाती—यद्येवं, किमत्र स्थीयते? यत्र कुत्रापि यदि दासीकर्मैव कर्तव्यं, यदि नात्र, लभ्येत तर्हि तदन्यत्र।

रोहिणी—सत्यं तत्। किन्तु यदि समये प्राप्येत। यादृशी ते जीविका तादृशी यदि मया प्राप्येत, अद्यैव एनां त्यक्तुमस्मि सिद्धा। अपि वसनमिदं तव स्वामिन्या ते दत्तम्? सर्वथा नवमेव भाति।

स्वाती—आम्, स्वामिन्यैव दत्तमिदम्। न मासमपि परिहितं तया। बलवती खलु तस्याः प्रीतिर्मयि। वसनानि च चोलकांश्च, मुहुर्मुहुर्मे प्रयच्छति। 'स्वजनेन सुदर्शनेन भाव्यम्' इति मनसि कृत्वा, परश्वैतत्तया नासिकाभूषणमपि प्रत्तं मे धारणार्थम्। अपि न त्वं किमपि लभसे?

रोहिणी—अहं लभे! अयि तासां वसने न एकस्या द्वयोर्वा दृष्टिर्निबद्धा। दशसंख्याकाभिरिष्टस्य, नेत्रयोर्लक्ष्यीकृतस्य च तद्वाससः, कुतो मे लाभः?

(ततः प्रविशति कृत्तिका।)

कृत्तिका—(स्वगतम्) तत्रापि निःशब्दमेव सर्वम्। अये! कान्वियं मद्गेहद्वारे?

स्वाती—तत्साधयामीदानीम्। प्रस्थिता शतवारम्, शतवारं च पुनः—

कृत्तिका—अयि बधिरे! असकृदाहूतासि। कतिवारं पुनराहतं द्वारं च। अपि मग्नौ ते कर्णौ? कुतो नोद्घाटितं त्वया द्वारम्?

रोहिणी—शब्दे श्रुते एव, मया अपावृतं द्वारम्। स्वामिनि! न तु कोऽप्यत्रासीत्।

कृत्तिका—अथ केयमपरा? ननु भद्रे! किं तेऽत्र प्रयोजनम्? कुत आगतासि? ननु पृच्छामि, अस्ति ते कार्यं किमपि?

स्वाती—कार्यं-मत्कार्यं-कुतो मत्कार्यम्?

कृत्तिका—किं प्रलपसि कार्यं कार्यमिति? कुतश्च सम्भ्रान्तास्येवम्? कथय स्पष्टम्। किमुदरशूलस्य उपाय विधातुमुत अर्धशीर्षवेदनामुन्मयं सूच्चीभिर्गं कारयितुमथवा क्वचित् स्त्रीरोगममोघेन शरेण योजयितुमुताहो कस्याश्चिद् दुष्प्रसूतिकायाः कृते मन्त्रितं तीर्थमेतेषां सकाशात् प्राप्तुमसि आगता?

स्वाती—अहं पुनः कुतस्तान् आगच्छेयम्?

कृत्तिका—तत्तावदात्मनो मन एव पृच्छ। अपि च रोहिणि! त्वमस्याः सहाया। शोभनं शोभनं खल्वेतत्। ननु सुष्ठु आचरितस्त्वया सेवाधर्मः। धष्टिके! सुष्ठु दर्शिता त्वया स्वामिनिष्ठा।

रोहिणी—स्वामिनि! किमेतदुच्यते भवत्या? नाहमीदृक्कर्मकारिणी स्त्री। इयं वराकी मद्ग्रामस्था। श्रावणश्रेष्ठिपत्न्या भरण्या गृहे दासीभावेन

वर्तते। अहेतुकमेव मां द्रष्टुमागता। न तादृग्वामकर्मकारिणी। स्वामिनि ! अतिसरला खल्वियम्।

कृत्तिका—आम्, अतिसरलयम्। अत एव भणामि। ईदृश अतिसरला एव मनुमें औषध मन्त्र, मात्रा वा, प्राप्तुमागच्छति। महिलाजनाय विनामूल्यमौषधदान नाम स्वमातुरेव पवित्र व्रतमतैरनुष्ठीयते। तत्कथय केन वास इद दत्तम्? सत्यमेव कथय।

स्वाती—स्वामिन्या भरण्या दत्तम्।

कृत्तिका—आम्, ईदृश वसन स्वामिनी ते भरणी तुभ्य प्रयच्छति!! कुतो दत्त कन दत्त, कदा दत्तमिति सर्वमेतज्ज्ञात मया सम्यक! गच्छ अत। न वपसर। अपेहि। मा पुनर्मुखमपि दर्शयात्र। (निष्क्रान्ता सा।) पश्य पश्य ता विलासनिर्भरा प्रलम्मन्थरगतिकाम्। इय नाम सरला!! रोहिणी तावन्मन्यते "स्वामिनी म स्तनधया" इति। न वा! वसन तत् तत्रभवत्या भरण्या दत्त नु? कपटिनीना कपटिनी खल्वियम्। अपि एतैरेव तद्दत्त न वा! कथय मा वा कथय सत्यम्। सम्यगवगतास्मि अहिन्या भरण्या। इयमह गत्वा पत्र तस्या लिखामि। अथ तु रोहिणि! कुत्र सन्ति तावदते?

रोहिणी—बहि क्वापि गता स्वामिनि!

कृत्तिका—अपि बहिर्गता? कुतो गता? कदा वा गता?

रोहिणी—स्वामिनि! यत्सत्य न जाने।

कृत्तिका—कथय असत्यम्। प्रभूत वितथ वद। नाह पुनरत्रस्य क्षणमपि स्थास्यामि, अन्वेषणसिद्धि यावत्। इयमह गत्वा भरण्या पत्र लिखामि। त्व तावद्गत्वा त भाद्रपद प्रपय मत्सकाशम्। हा धिक्! कीदृशीय मच्छलना। भगवन! त्वमेवात्र साक्षी। (निष्क्रान्ता।)

---

## चतुर्थः प्रवेशः ।

( ततः प्रविशति रेवती देवदर्शनादनन्तरं गृहं प्रतिनिवर्तमाना। )

रेवती—कथं नु गृहं प्रापणीयम् ! आदौ तावदनशनम्। तत्रापि चण्डोऽयं भास्करस्य तापः। तेन विह्वलाः खलु मे प्राणाः। हा!

( ततः प्रविशति फाल्गुनरायः। )

फाल्गुनरायः—न सा क्वापि लब्धा। देवालयं गतः, ततः उपवनम्, अन्विष्टाश्च आम्रराज्याम्। न दृष्टिपथमपि तावदायाता। तद् गृहमेव गन्तव्यमधुना। भोः! का नु खलु इयम्! कुतश्चैव चेष्टते।

रेवती—हन्त! इयमहं पतिता। भोः पतिता खल्वहम्। धावत, परित्रायध्वम् माम्! ( सहसा मूर्च्छिता पतति। )

फाल्गुनरायः—हा हन्त! नन्वयमागतोऽस्मि। मा भैषीः। ( तां समुद्धृत्य वीजयितुमारभते। ) न जाने कस्य केयं वराकी। न किमपि ज्ञायते। एतत्खलु सुदैवमस्याः, यन्नात्र पाषाणे पतिता। अन्यथा, शीर्णशीर्षा प्राणैरपि व्ययोजयिष्यत।

( कृत्तिका उपरितनभूमेर्गवाक्षस्य द्वारमुद्घाटयति। )

कृत्तिका—कस्मादयं श्वा शब्दायते! किं रे! कः खल्वयं पुरस्ताद् वृक्षस्याधः! अम्मो! अपि, एते अमी! उपविष्टाश्च किं कुर्वन्ति! कस्य पुनरमी हस्तस्तेषां स्कन्धे! धिगिमां निर्लज्जतां पुरुषाणाम्। सूर्ये तपति, रथ्यायाम्, गृहस्य पुरस्तात्, ( निर्वर्ण्य ) आः! इयं तावच्छायाहृतका कुरुतेऽन्तरायम्—

फाल्गुनरायः—अहो प्रभूतता घर्मसलस्य। ( हस्तगतपटकेन तस्याः स्वेदमपाकरोति। )

कृत्तिका—हन्त! भवदस्यायास्तस्याः स्वेदमेते हस्तपटकेन अपाकुर्वन्ति। भगवन्! वरमन्धता, न पुनरीदृग्दर्शनं परमलज्जास्पदम्। निद्रावशाया मे चरणौ यदि कदाचिदनावृतौ, न तौ सकृदपि प्रावरणेन आवृतौ एतैः। पष्ठिकायाः पुनरस्या घर्ममपाकुर्वन्तः, पल्लवं पदभ्रष्टं यथावत् स्थापयन्तः, देहभारमपि तस्याः स्वशरीरेण उद्वहन्तः, कथं न लज्जन्ते एते! अथवा,

सम्यगिदमुक्तं, यत् 'यत्स्वकीयायाः, तत्क्षारम्। यत्परकीयायाः, तत्सारम्' इति।

फाल्गुनरायः—(रेवत्याः कर्णसंनिधौ मुखं नीत्वा) अयि, अयि असि समाश्वस्ता? अयि—

कृत्तिका—आः! किमिदानीं क्रियताम्? कपोलसंनिधौ मुखम्। ननु भणामि, यदि नान्यस्मात्कुतश्चित्, तदा भगवतः सूर्यनारायणात्तावदपत्रपतां भवान्।

रेवती—(मूर्च्छन्ती) मा मैवम्। किमिह रथ्यायाम्?

कृत्तिका—ननु श्रूयतां, श्रूयताम्। दग्धा यदि भवतो धीः, तस्यास्तावदादीयतां मुहूर्तम्।

फाल्गुनरायः—अयि आयासि मम गेहम्? मुहूर्तेन प्रापयिष्यामि त्वां स्वनिवासम्।

कृत्तिका—गेहम्? नन्विदं गेहम्? प्रविशतु तावत् पतिका, यदि केशांस्तस्या न निकृन्तेयं, कृत्तिकेति नामापि न धारयेयम्। यद्वा तावच्चिद्यातु गृहे, ततो नरोत्तुण्डमेव दारयिष्यामि तस्याः। 'अयि आयासि मम गेहम्!' धिक्प्रगल्भितं युष्माकम्। तिष्ठत। स्वयमेवागत्य करिष्ये प्रतिवचनम्। (गवाक्षादपक्रान्ता।)

फाल्गुनरायः—कुत्र ते गृहम्? किं नामधेयम्? कस्य खलु कन्या?

रेवती—(विह्वलेन स्वरेण) इहैव मे मङ्गलवाटके। गणिकाया मघायाः कन्याहं रेवतीनामधेया। मातरद्य सोमवासरः, इति स्नात्वा कार्तिकनाथमन्दिरं गता। कृतं दर्शनं, समाप्य च प्रदक्षिणां, प्रतिनिवृत्ता। दिनद्वयात्प्रागेव ज्वरिता, अद्य प्रभातवातेन सहसा मूर्च्छिता। दिष्ट्या भवतः संनिधानेन रक्षिता।

फाल्गुनरायः—अयि एहि मम आगच्छ गेहे स्वच्छं शर्करामलकम्? विशेषतस्ते स्वास्थ्येन। यदीच्छं, मामां दुग्धे पृष्ट्वा ते दास्यामि।

रेवती—सुन्दरं खलु प्रलोभनम्। किन्तु अनिर्वृत्तायां पूजायां, न किमपि भक्षणीयम्। समीपमेव मे गृहम्। तद् गच्छामि मन्दं मन्दम्।

फाल्गुनराय.—अथवा, यथा ते रोचते। त्वद्गेहं यावदागमिष्यामि तर्हि त्वया साकम्। उत्तिष्ठ, अवहिता। (निष्क्रान्तौ।)

(ततः प्रविशति खंजन्ती कृत्तिका)

कृत्तिका—*अपि न वियते भणितिहतका 'आदौ स्वराग्रेरणं, तत्रापि वृश्चिकदशनम्'* इति! सोपानेनावतरन्ती तथाऽऽहतास्मि पादे, यथा शीर्ष गता वेदना, अन्धतमस च|प्रसृतं नयनयोः पुरस्तात्। आस्ता तावत्त पादघातहतकः। आपत्स्ये क्षणात्प्रकृतिम्। किन्तु, कथ न कोऽपि वृक्षस्याधस्तादृश्यते! तत्कि गृहं प्रविष्टौ! कः खल्वत्तौ तत्र गच्छति! न कोऽपि। तत्, क्व गतौ एतौ! नात्रापि कश्चन! (त्वरया। रोहिणि! अयि रोहिणि! इयमपि हतका नष्टा क्वापि। (ततः प्रविशति रोहिणी।) हञ्जे रोहिणि! कुत्र सन्ति एते!

रोहिणी—स्वामिनि! कथमहं जानीयाम्!

कृत्तिका—*अपि न इदानीमेव गृहं प्रविष्टाः!*

रोहिणी—न खलु। स्वामिनि! अहं बहिरेव आसं वेदिकायाम्।

कृत्तिका—कथय असत्यम्। चाण्डालि! जिह्वा तेऽपशीर्येत। यदि एवं दम्पती विसंवादयसि, तदा जन्मशतकं देवदासी भविष्यसि। 'न' इति भणितं त्वया। कुतस्त्वद विश्वसिमि! सर्वासु वीथिषु अन्विष्य, आनेष्यामि तान् प्रकाशम्। तत्वरस्य। हा हतास्मि। हतास्मि। इदमाघाते आघातान्तरम्। *किन्विदम्! इयं मतिकृतिर्दृश्यते तरयाः कस्यापि जनस्य। साधु!* शोभनमापतितम्। समीचीनमेतत्त्वृत्तम्। निगूहतु तावदात्मानमेषा स्तम्भान्तेषु। इय हि कृत्तिका, या सूत्रेण स्वर्गमारोहामि। यदि ततोपि ताम् अन्विष्य आनेष्यामि तदा स्वीक्रियता मे महत्ता। आदौ तावदेते यथापराध सम्यग् दण्डनीयाः। अथ इदमेवमाचरितम्। श्वः पुनः षष्ठिका काचन आनीय नर्तयेयुर्मद्गुरसि। भर्तारः! भर्तारः! भर्तारः! ननु पृच्छामि, कुत इमे भर्तारः! कुटुम्बिनीनां प्राणहर्तारः एव एते।' (निष्क्रान्ता।)

## पञ्चमः प्रवेशः ।

( ततः प्रविशति फाल्गुनराय , भादव्यश्च । )

**फाल्गुनराय** —भादव्य ! त्व खलु सत्यवादी सत्यशीलश्चासि भृत्य । अत , आगामिन्या विजयादशम्या, प्रवृत्ते उत्सवे, पाणि ते रौप्यकङ्कणेन चारुणा भूषयितुकामोऽस्मि । रूप्यवलय ते रुच्ये स्यात्, अथवा पट्टकेन पृथुपल्लवन शिरस्तेऽलङ्कुर्याम् ? तत्कथय । यदि न उभयमपि रोचते, त्रिधारक क्षौमप्रान्तकम् अधोवास एव अतिसुन्दर ते यच्छेयम् । अथवा, इदानीं तावन्न किंचिदपि ते इष्टम् ? भवतु ! पश्याव पुरस्तात् कदाचन । अस्तु, एतत्तावदवधारय । गत्वा निभृतम्, अभ्यन्तरे सा किमनुतिष्ठतीति निरीक्ष्य एहि ।

**भादव्य** —( स्वगतम् ) स्वामिनस्तावत्प्रीता । तैश्च झटिति मे हस्ते कटक निबद्धम् । कटक च पट्टकभावेन परिणतम् । पट्टक पुनर्वसनीकृतम् । किन्तु यदा मया न 'आम्' इति वा, न 'न' इत्यपि वा भणितम्, निःसृतस्तदा स्वामी वचनात्, अञ्जसा प्राप्तश्च 'पुरस्तात् पश्याव॰' इत्येना स्थितिम् । एतदेव परम भाग्य मे यदिद विद्यमान वास एव, न अपहृतम् ।

**फाल्गुनराय** —किं चिन्तयसि रे भादव्य ! 'इद ते रोचते तद्वा ?' इति पृष्ट सन् 'इदम् अदम् कुतो मे' इत्यभण । साम्प्रत पुनर्विचारयस्तिष्ठसि ! तद्गच्छ, द्रुतमागच्छ !

**भादव्य** —स्वामिन् ! नाहं तच्चिन्तयन्नतिष्ठम् । सति भर्तरि, किं मे पारितोषिकेण ? यदि, अच्छिन्न प्रभूतवेतन मासि मासि लभ्येत, कृतार्थस्तदा भवेयम् । किन्तु शिरोवदना स्वामिनीं बाधते इत्यत —

**फाल्गुनराय** —अत एवाह प्रष्टु गच्छामि । गच्छ । प्रत्यक्षीकृत्य आगच्छ । मा खलु तस्यै मदागमन निवेदय ।

**भादव्य** —न हि, न हि । कुत खलु निवेदयेयम् ? ( निष्क्रान्त । )

**फाल्गुनराय** —इदानीं 'प्रभातेऽद्य क्व गता ? केन मिलितम् ? किं सम्भाषण सवृत्तम् ? सार्धं त्वया कोऽभवत् ? कदा गमन व्यवसितम्,

कयोश्च ? इति प्रश्नादनन्तरं प्रश्नान्तरमिति अनवरत गोलिका विसृजेयम् । सर्वस्यास्य पुरत स्यातुमपि न सा क्षमा भविष्यति । प्रतिवचन कुर्वती अत्र वा तत्र वा सम्रमेत्, मुह्येत्, प्रमाद्येत् । अल्पेऽपि छिद्रे लब्धे, भविष्याम्यग्रेसर, अभियास्यञ्जेष्यामि च । पर्यवसाने स्ववैतव तया स्वीकारयिष्यामि च । तदैव 'फाल्गुनराय' इति सार्या स्यान्मे पदवी । (भाद्व्य आगच्छति ।) किं रे भाद्व्य ! किमसौ कुरुते ?

भाद्व्य —न किंचित् । सुखासनमधिशयाना स्वामिनी । पार्श्वे रोहिणी तिष्ठति । स्वामिनी विह्वलस्वरेण कथयति किंचन ।

फाल्गुनराय —तद् गच्छ । आत्मनो नियोगमशून्य कुरु । (निष्क्रान्तौ ।)

(तत प्रविशति यथानिर्दिष्टा रोहिणीद्वितीया कृत्तिका ।)

कृत्तिका—अयि कुतो नि शुल्कानि औषधानि, कुतो वा असहाया स्त्रिय ? आसन्नमरणया मात्रा शपथ ग्राहिता नाम । कपटपाटवानि सर्वाणि इमानि सम्यग् जानामि इति शायताम् । स्त्रीरोगचिकित्सा खलु स्त्रीभि कर्तव्या । किं तत्र पुरुषै कार्यम् ? अन्धा त्व न पश्यसि जालकान्येतानि मत्स्यबन्धकानि । अहमपि त्वमिवाभवम् । अद्य तु मुषु उन्मीलिते मे नयने । न च अहेतुकोऽयं मे हृदयदाह । (पटान्तेन नेत्रे परामृश्य) ननु पृच्छामि, किमहं गुणविहीना, विरूपा, कज्जलवर्णा, अपगतयौवना वासि सवृत्ता ?—येन पश्यन्त्या मे, असहायामेते चेष्टन्ते । हन्त ! अभागिन्यो वय स्त्रियो, या देवदर्शनार्थमपि गृहान्निर्गन्तु न क्षमा । यासा च बन्धुजनदर्शन मपि निषिद्धम् । एते पुरुषास्तु, अपास्य जनलज्जा मनस्विनं स्व, अहनि, प्रकाशमाने सूर्ये राजमार्गे च, यथेष्ट प्रकटप्रकट च जाल्मायन्ते । तथापि सम्माविता एवैते । अहो महान्खलु अन्याय्यो निर्बन्धहतकोऽय कियच्चिर सोढव्य ?

रोहिणी—'स्वयमेव प्रत्यक्षीकृतम्' इति कथयति भवती । तत्र किं भणामि ? किन्तु, भर्तृ स आचारोऽपि न सर्वथा अनुचित । यतो यदि न वराकीषु स्त्रीषु अबलासु, क्व पुनरपरत्र शौर्यं, स्वातन्त्र्यम्, आत्ममित्व चात्मनस्ते प्रकटीकुर्यु ?

कृत्तिका—यत्सत्य जीवनादेतादृशा मरणमपि मे वर प्रतिभाति । न जाने हीरककणिकाम्, अहिफेन वा भक्षयेयम्, विष वा पिबेयम्, कूपे

तडागे वा आत्मानं क्षिपेयम् इति । नन्वस्त्येव आभाणकः–' यावदभिनवा प्रभूतकुतुका, अथोपभुक्ता भग्नकपर्दिका ' इति विवाहादनन्तर स्तोकान् दिवसान् ' किमेनामुरसि लग्ना स्थापयेयम्, स्कन्धाभ्यां वा वहेयम्, कटितटे वा धारयेयम्, ' इत्येवमवर्तन्त एते मयि । सर्वोऽपि भणति, ' विधुरस्यापि रसिकस्य पत्युर्लाभेन दिष्ट्या वर्धते इयम् ' इति । एतान्दिवसांस्तु अनुभूयते क्रुद्धता, भ्रूभङ्गश्च एतेषाम् । स्नेहक शब्दमात्रमपि न भाषन्ते । शत पुनः प्रश्नाः क्रियन्ते ' किं भूषणानि धारयसि ? कस्मात्कौशेयं परिदधासि ? कुतो देवालयं गच्छसि ? ' इति ।

रोहिणी—किन्तु, स्वामिनि ! कोऽत्र उपायो विधेयः ? ' नून यस्य अधिकारः, सोढव्य एव तस्य पादप्रहारः ' ।

कृत्तिका—आम्, सह्यते पादप्रहार ! ननु कथयन्ति–कस्मिंश्चिद्देशे स्त्रियः पुरुषान्दासीकुर्वन्ति किल । तथैवेह भवितुमर्हति । येन द्वाराद् बहिः कातराणां चुल्लिवीराणां अस्माकं पतिदेवानामेतेषां नेत्रयोरुन्मीलन स्यात्, तयोरञ्जन च पतेत् ।

रोहिणी—किन्तु, अपि शोभनमेतत् ?

कृत्तिका—शोभनमिति कदा मयापि भणितम् ? अहं तावच्चिरंगलवचना, अपितु निर्मलमानसा, ऋजुस्वभावा चास्मि नारी । केवल विवाहशपथं पालयन्तु पुरुषाः, न तद्व्यतिरिक्त किंचिदिच्छामो वय स्त्रियः । आस्तां तावदिदं दुर्दैवकथनम्—किन्तु, अपि न कथयसि प्रातः का त्वां द्रष्टुमागता इति ?

रोहिणी—स्वामिनि ! न मे भणितस्याक्षरमपि अलीकम् । सत्यमेव सा तेषां गृहे वसति ।

फाल्गुनराय —( अपवार्य ) किं कथितम् ? न सम्यगाकर्णयितु शक्यमितः । किन्तु, एषा कापि ' सा ' भवति । अथ का इयं ' सा ' ? ( स्तोकमग्रे सरति । )

कृत्तिका—अयि पाषाणजडे ! कृतोपकार स्मृत्वा तावत्कथय सत्यम् । अन्यथा " भुञ्जती पोषणं प्राप्तवती, सा पुनः पोषकमेव दष्टवती " इत्युक्तिं सार्थां करिष्यसि ।

रोहिणी—भवत्या एवं भणिते, कः उपायः ?

फाल्गुनरायः—(अपवार्य) सर्वं सदिग्धमेतत्प्रवर्तते । न दृढ किंचन सूत्रं हस्तगतं भवति, एतावतापि कालेन ।

कृत्तिका—तदपेहि । मा कथय । ननु इदमागमिष्यति मत्सत्रोचरम् । अपि ज्ञात त्वया यत् 'निगूढेऽपि कुक्कुटे, उदेत्येव अरुण' इति ? अहमेव समग्र तस्य अन्वेष विधास्यामि । तदपेहि । अपेहि इत ।

फाल्गुनराय—(अपवार्य) 'समग्र 'तस्य' अन्वेष विधास्यामि' । अहो अकस्मादेव 'सा' 'सः' संवृत्ता ! कुतश्च पुनरयं 'सः' उत्थित ?

कृत्तिका—आशसासि नु 'गच्छ' इति ? ननु भणामि, मा चक्षुषी मे पीडय ! स्तोक सुरभि जल तावदानय । (गतायां रोहिण्याम् प्रतिकृतिं करेण धृत्वा अवलोकयन्ती) अपि दुष्टया तया अस्मत्पतिदेवसपर्कात् एवमुज्झितोऽसि त्वम् ?

फाल्गुनरायः—(अपवार्य) किमिदम् ? कस्यापि प्रतिकृतिरियम् । कुतः सन्देह ? मुहूर्तात्प्राक् बहिर्गता, मियकरस्य प्रतिकृतिं गृहीत्वा इव प्रति निवृत्ता । किन्तु, प्रथम तावत् सम्यङ् निरीक्षे ।

कृत्तिका—(हस्तेन दर्शयन्ती) अहो रमणीयता रूपस्य । ईदृश रत्न तया अपास्तम् । न जाने मद्भर्तरि कोऽधिको विशेषस्तया लक्षित इति ।

फाल्गुनरायः—(अपवार्य) तस्य रूपस्य स्तोत्रगान, मामुद्दिश्य च मुखविकृतिं करोषि । भवतु । पश्यामस्तावत् ।

कृत्तिका—अहो सुरभिता तस्य पुष्पार्कस्य अस्या प्रतिकृतौ लग्नस्य !
(इति जिघ्रति ।)

फाल्गुनराय —(अपवार्य सक्रोधम्) अहो दृश्यतां निर्लज्जता अस्या. । चुम्बति त चित्रगत चोरम् । अपि करोमि अस्या मुखभङ्गम् ? किन्तु नास्माभिः प्राकृतैरिव ताडन कर्तव्यम् । किन्तु, युक्त्या प्रयुक्त्या वर्तितुमेव युक्तम् ।

कृत्तिका—चाण्डालिके ! दिष्ट्या ईदृश प्राणवत्या त्वया चित्रमिदम्, एवम्, एवम्, वक्षसि स्थापयितव्यमहर्निशम् । (दृढ परिष्वजते ।) किन्तु, कुतस्ते ईदृशी परीक्षणक्षमता ?

फाल्गुनराय —(अपवार्य क्रोधातिशयेन) परा कोटि सल्विय निर्लज्ज तायाः। आ, वक्षसा त परिष्वजते! यद्यस्मिन्नवसरे—! अथवा, किमनेन नृशसेन विचारेण! विवेक खल्वस्माक शरणम्। सुविचारसाध्य यत्, तदेव साधनीयम्।

छुरिका—(प्रतिकृतिगताम् आकृतिम् उद्दिश्य) ननु त्वादृशस्य भर्तु प्राप्त्ये तपश्चरणमेवावश्यकम्। असौ पुनरस्माकम् अरण्यमहाराज (इत्यर्धोक्त एव फाल्गुनरायस्तस्या हस्ता प्रतिकृतिम् आक्षिपति।) आ अम्मेऽ! कोऽयम्!

फाल्गुनराय —अस्म्यहम् 'अरण्यमहाराज'। स तव उद्यानमहाराज कुञ्जविहारिण सुकुमार द्रष्टुमागत। तत्कथय, अपि निपुण गृहीता न वा!

छुरिका—ननु क्वाह पलायिता! आमरणमेवास्मि निगृहीता भवता। अपि लब्ध अवसर, गृह प्रतिनिवर्तितुम्!

फाल्गुनराय —प्रथम तावत् आत्मविषयकम् उत्तर ब्रूहि।

छुरिका—कुत आत्मविषयकमुत्तरम्!

फाल्गुनराय—(हस्तगता प्रतिकृतिमुद्दिश्य) ननु पृच्छामि, किम् एतत्!

छुरिका—ननु भणामि, भवत एव निर्लज्जताया इद प्रमाणम्।

फाल्गुनराय —मम निर्लज्जताया प्रमाणम्! अथवा, समीचीन तव कथनम्। ममैव निर्लज्जता इयम्।

छुरिका—ननु पृच्छामि, अपि न लज्जितो भवान्, एतत् स्वीकुर्वाण।

फाल्गुनराय —कुत सत्याङ्गीकारे लज्जा! आत्मनो मनोमोहनस्य प्रतिकृति गृहीत्वा तां चुम्बनैर्वैरविमिश्रीम्, वक्षसा दृढ परिष्वजमानां च त्वा प्रत्यक्षी कुर्वन्नपि अहम्, न यत् पादप्रहारपूर्वक गृहान्निष्कासयितु त्वामिच्छामि, तत्, अहमेव निर्लज्ज! कोऽत्र सदेह!

छुरिका—किमिदानीं भणित भवता! भो हतक! अहो न्याय! दृश्यताम्। "स्वय गोमय भक्षयितव्यम्, परस्य पुनर्मुखम् आघ्रातव्यम्!" इत्य तावत्य न्याय।

फाल्गुनराय—मा अवसरमपि अत्र गमुचार्य। इय वै मानपहलमस्य प्रतिकृति, तव हस्ते गृहीता।

छत्तिका—यद् भवते रोचते। न वदामि। अनुवर्ततां तावदामनश्छन्द भवान्। भवात्तावत् सर्वथा निष्पाप। नून तथा निष्पाप यथा कन्ठोदकं भवत सर्वैर्ग्राह्यम्। परस्त्री नाम भवतो मातृवद्वन्दनीया। न सा तिर्यगव लोकनपूर्वमपि दृष्टा भवता। अद्ययावन्न मया किंचिल्लघ्वपि दृष्टम्। ध्रुव, नैकवारमपि दृष्टम्।

फाल्गुनराय—किं भणसि?

छत्तिका—किमन्यद् भणितव्यम्? स्वयमेव कथयामि। न अर्धमपि प्रहरस्य व्यतीतम्। राजमार्गे, मत्स्यगवाक्षस्य पुरस्तात्, का नु अङ्के निधाय, उपविष्ट आसीद् भवान्? न मया किमप्यवलोकितम्। केवल मुकुलित नयना आसम्।

फाल्गुनराय—किं त्वया भणितम्? पुनस्तावत्कथय।

छत्तिका—वचनपल्लव मधुर सुदूर मधुत, तस्या सुघटित कर भवत स्कन्धे, भवत करोऽपि तस्या कपोल! ननु कदा? नैव मया दृष्टम्। भवान् पुनरेकपत्नीव्रत पालयति। कुत एतद् भवता क्रियेत? भवान्नाम रामचन्द्रस्य साक्षादवतार एव।

फाल्गुनराय—(स्वगतम्) आम्, एव खल्विदम्। इदानीम् अवगतम्। प्रसङ्गोऽसौ दृष्ट अनया, इत्यनुमीयते। येषा न तद् वृत्त यथार्थतोऽवगतम्, तैरेतदशमव तन्मन्यत। मम मनसि तु नासीत् पापलवोऽपि।

छत्तिका—कुत सम्भ्रान्तचित्त इव भवान्? ननु धौततण्डुलवत् निर्मलो भवान्। नासीदणुमात्रमपि पाप भवन्मनसि तदानीम्। कुतस्तर्हि विवर्णे भवतो मुखम्? कस्य इय पृच्छा 'अपि आयासि मम गेहम्?' इति? अथ आनेष्यत सा पत्रिका गृहम्, प्रादयिष्य तस्यै प्रभावम्।

फाल्गुनराय—ननु भणामि यदि सा वराकी सहसा मार्गे मूर्च्छिता पतिता—

छत्तिका—अवगत मया सर्वम्। परमकोमलहृदयो हि भवान्। द्रवित भवदन्त करण, निहिता च सा वक्षसि मन्ता नु? मूर्च्छिता तामवलोक्य सजातकरुण भवन्मन। अत एव भवान्तस्या कपोल यथेष्ट परामृष्टवान् नु? यत्तस्य नवनीतकोमलतर भवन्मन। अत कोमलाभ्यामोष्ठाभ्या भवान्तस्या कपोलाद् घर्मम् अपाकुर्वस्तरयौ, एवमव नु?

फाल्गुनराय:—(आत्मगतम्) दर्शितदोष सर्वथा हतवाङ्निवृत्तश्च कृतोऽस्म्यनया। नेदम् इदानीं साम्प्रतम्। (प्रकाशम्) साधु! प्रवल्गता ते प्रलाप। अथवा प्रतिकूलया साहाय्येन करते प्रियकर इत्येप्रथमम् अवेदयामि, ततः अनन्तरम् एव च यत्कथनीय तत्सफल कथयिष्यामि। अयमहं तदर्थमेव प्रस्थित। का पुनराश्रितासि कल्पनाम्? (सक्रोध निष्कान्त।)

कृत्तिका—अलमेतेन। न खलु न परिचितो मे, अय भवत आविर्भाव। कारणमीदृश किंचिद् उद्भाव्य, निर्गन्त्य गृहात्, आश्रयितव्य च स्वैरविलसितम्, इति नित्यप्राय एव क्रमो भवत। अहो विस्मय। अयि परमेश! अलम्, अलमनेन नारीजन्मना। यत्कथित गीतेन—

"जन्मनि जन्मनि पाप कुरुते विविध यज्जीवः।
तदेव गच्छति भोक्तु स्त्रीत्व दारुणकष्टमयम्।"

इति तदक्षरश सत्यमेव। (निष्क्रान्ता।)

फाल्गुनराय—(प्रविश्य) अयि! कथ गतैव! अथवा, गच्छतु। अहो वैपरीत्य न्यायस्य अस्य जगत। क्व मम सकल्प? क्व च अनया तत्र उद्भावित अर्थ, अनर्थकर! यत्सत्यम्—

गीतम् (तिमिर भय होय)

नष्टकलिकालक धुशनिसैंहिकेयौ। पूर्वसंचितछलम् किं न कलिता मया? ॥ ध्रु०॥ बाला नु मूर्च्छिता। सहजमेवोच्छ्रिता। पुण्यमपि वराक, तया पाप मतम् ॥ १॥ प्रियचित्रचुम्बनम्, वक्षसाऽऽपीडनम्। ईक्षित चक्षुषा॥ तदपि किल 'निर्मला'॥ २॥

इति समाप्त प्रथमोऽङ्क।



# द्वितीयोऽङ्कः ।

## प्रथमः प्रवेशः ।

( फाल्गुनरायस्य निवासः । )

फाल्गुनराय.—ह्यः किल अर्धं दिवसस्य, अर्धं रात्र्याश्च, अन्वेषयत एव मे व्यतीते । न तु ईदृङ्मुखाकृतिः कश्चन दृष्टो जनः । गतोऽहं चतुष्पथम्, तथा वसन्तोद्यानम् । सायं कार्तिकनायस्य मन्दिरं कीर्तनं श्रोतुं यातः । अनभ्यस्तोऽपि ईदृशे व्यवहारे, गतः सङ्गीतश्रवणार्थं द्वित्राणि स्थानानि । तादृशेषु हि स्थलेषु रसिकजनाः समितन्त्येव । अस्य महाभागस्य तु न सादृश्यलेशोऽपि समासादितः कुत्रचित् । भवतु, अद्य माद्व्यादेव अन्वेषणमारभे । माद्व्य, अरे माद्व्य ! कस्मिन्व्यापृतोऽसि ? इतस्तावदायाहि ।

माद्व्यः—(अभ्यन्तरत) दीपशृङ्खलीना काचलोलकेभ्यो धूलिकणानपनयामि, भर्तः ! अयमागतः ।

(ततः प्रविशति हस्तेन हस्तं परामृशन् माद्व्यः ।)

फाल्गुनरायः—सुन्दरं ते वस्तु एकं दर्शयामि । पश्येदं चित्रम् । कीदृशमेतत् ?

माद्व्य.—(चकितः) चारुतरं, ननु चारुतरमेतत् भर्तः ! अतीव शोभनमेतत् । एषा सरला अग्रवमा च नासिका, तेजस्विनी सुवृत्तायते च एते नयने, सूक्ष्माग्रं रक्तोज्ज्वलं च शिरोभूषणं, धनुराकृती भ्रुवौ, सवल्लितमेतच्छ्मश्रु हस्ते शोभना समुष्टिका चेयं वेत्रयष्टिका, अङ्गे त्रिलक्षणं कञ्चुकं, नूनं नृपतिरेव विराजमानोऽयं प्रासादे । किन्तु, भर्तः ! किमनेन चित्रेण मम दर्शितेन ? यदि सुन्दरी काचन पश्येदिदं, तदा तत्क्षणमेव अनुरक्ता तस्मिन्भवेत् ।

फाल्गुनराय·—(स्वगतम्) सम्यगाह । अनुभवपूतमाह । ननु प्रीतप्रीतैव सा तस्मिन् । (प्रकाशम्) यदि नाम न ते दर्शयामि, कस्मै तर्हि दर्शयामि ? अपि दर्शयामि एतत् अस्याः ?

भादव्य —न खलु । कथमेव भाषते भवान्? किमनेन परिणीतया दृष्टेन? पाप, ननु पापिष्ठ, तस्मात् ।

फाल्गुनराय —अरे शोभन विनोदनम् एतत् । भर्तरि कार्यार्थे गते, मुहूर्ते सन्निधानमस्य रोचक स्यात् । आस्ता तावदिदम्। अपि अवगत कस्येद चित्रमिति? ते अस्माकं ननु-त्वमेव तावत्कथय प्रथमम्। अपि सन्तीमे परिचितास्ते?

भादव्य —न हि न हि भर्त ! नमे मम परिचिता । एना मुखाकृतिम् अहम् प्रथममेव अद्य अवलोकयामि । क्व महाभागा ईदृशा, क्व च दरिद्रा मादृशा ! कुत खलु परिचय, आवयो !

फाल्गुनराय —(स्वगतम्) अहो धूर्तोऽय यद्रहस्य न मनागपि विवृणोति । (प्रकाशम्) अरे भादव्य! महाभागोऽय प्रसङ्गवशादागच्छति अस्मद् गृहम्। तस्या एतया च पितृकुलस्य सम्बन्धत परिचयो वर्तते ।

भादव्य —मया तावन्नमे कदापि दृष्टपूर्वा ।

फाल्गुनराय —न कदापि? न खल्वेते सम्भाषण ते जात सकृदपि? न कदापि तस्या पत्रादि प्रापय एतान्? नैते शर्कराजल सेवितुमेना प्राप्ता? प्रात, सायम्, अपराह्णे, रात्रौ वा, न कदाप्यागता एते? ब्रूहि तर्हि मच्चरणौ स्पृष्ट्वा 'नैते कदाचन अस्मद्गृहम् आगता ' इति ।

भादव्य —किन्तु भर्त । भवतोऽसत्यकथनेन को मे लाभ? नैते सलाप, न चैतेषा दर्शनम्, न पत्रादिप्रापणम्, किं बहुना—न कोऽपि व्यवहार एते सवृत्त । अयमह भवत्श्चरणौ स्पृष्ट्वा शपे । यदि पुनरसत्य मद्वचनम्, भवच्चरणयोरेव दग्ध स्याम् ।

फाल्गुनराय—भादव्य! यदि शपथवचनैरीदृशै स्वयमेव हस्तौ दग्धौ अभविष्यताम्, तदा विशालेऽस्मिन् जगति, नैकोऽपि मनुष्यो दृष्टिपथ मागमिष्यत्। भस्मसादेव सर्वेऽभविष्यन्। यदि न पुरुषा स्त्रिय सर्वा एव, ध्रुव लोकान्तर प्राप्स्यन्।

भादव्य—मया प्रत्यक्षीकृतमेतत् । अस्मद्ग्रामे अविशाल एको मिथ्याशपथमुदघोषयन्। शपथार्धेव, अर्धे तस्य अविघनस्य, तत्रैव मृत्युना सादीकृतम्।

# द्वितीयोऽङ्कः ।

## प्रथमः प्रवेशः ।

( फाल्गुनरायस्य निवासः । )

फाल्गुनरायः—ह्यः किल अर्धं दिवसस्य, अर्धं रात्र्याश्च, अन्वेषयत एव मे व्यतीते । न तु ईदृङ्मुखाकृतिः कश्चन दृष्टो जनः । गतोऽहं चतुष्पथम्, तथा वसन्तोद्यानम् । सायं कार्तिकनाथस्य मन्दिरं कीर्तनं श्रोतुं यातः । अनभ्यस्तोऽपि ईदृशे व्यवहारे, गतः सङ्गीतश्रवणार्थं द्वित्राणि स्थानानि । तादृशेषु हि स्थलेषु रसिकजनाः समिलन्त्येव । अस्य महाभागस्य तु न तादृशस्थलेष्वपि समासादितः क्वचित् । भवतु, अद्य भाद्रव्यादेव अन्वेषणमारभे । भाद्रव्य, अरे भाद्रव्य ! कस्मिन्व्यापृतोऽसि ? इतस्तावदायाहि ।

भाद्रव्यः—( अभ्यन्तरतः ) दीपपङ्क्तीनां काचगोलकेभ्यो धूलिकणानपनयामि, भर्तः ! अयमागतः ।

( ततः प्रविशति हस्तेन हस्तं परामृशन् भाद्रव्यः । )

फाल्गुनरायः—सुन्दर ते वस्तु एकं दर्शयामि । पश्येदं चित्रम् । कीदृशमेतत् ?

भाद्रव्यः—( चकितः ) चारुतरं, ननु चारुतरमेवैतत् भर्तः ! अतीव शोभनमेतत् । एषा सरला अग्रवणा च नासिका, तेजस्विनी सुदूरायते च एते नयने, सूक्ष्मश्च रक्तोज्ज्वलं च शिरोभूषणं, धनुराकृती भ्रुवौ, सवलितमेतच्छ्मश्रु । हस्ते शोभना समुद्रिका चेयं वेत्रयष्टिका, अङ्गे विलसत्ययं कञ्चुकः, नूनं नृपतिरेव विराजमानोऽयं प्रासादे । किन्तु, भर्तः ! किमनेन चित्रेण मम दर्शितेन ? यदि सुन्दरी काचन पश्येदिदं, तदा तत्क्षणमेव अनुरक्ता तस्मिन्भवेत् ।

फाल्गुनरायः—( स्वगतम् ) सम्यगाह । अनुभवपूतमाह । ननु प्रीतिमतीव सा तस्मिन् । ( प्रकाशम् ) यदि नाम न ते दर्शयामि, कस्मै तर्हि दर्शयामि ? अपि दर्शयामि एतत् अस्याः ?

भादव्य —न खलु । कथमेव भाषते भवान्? किमनेन परिणीतया दृष्टेन? पाप, ननु पापिष्ठ, तत्स्यात्।

फाल्गुनराय:—अरे शोभन विनोदनम् एतत् । भर्तरि कार्यार्थे गते, मुहूर्ते सन्निधानमस्य रोचक स्यात् । आस्ता तावदिदम्। अपि अवगत कस्येद चित्रमिति? ते अस्माक ननु-त्वमेव तावत्कथय प्रथमम्। अपि सन्तीने परिचितास्ते?

भादव्य —न हि न हि भर्त! नमे मम परिचिता । एना मुक्ताकृतिम् अहम् प्रथममेव अद्य अवलोकयामि । क्व महाभागा ईदृशा, क्व च दरिद्रा मादृशा? कुत खलु परिचय, आवयो?

फाल्गुनराय —(स्वगतम्) अहो धूर्तोऽय यद्रहस्य न मनागपि विवृणोति । (प्रकाशम्) अरे भादव्य! महाभागोऽय प्रसङ्गवशादागच्छति अस्मद् गृहम्। तस्या एतेषा च पितृकुलस्य सम्बन्धत परिचयो वर्तते।

भादव्य:—मया तावत्तमे कदापि दृष्टपूर्वा ।

फाल्गुनराय —न कदापि? न खल्वेते सम्भाषण ते जात सकृदपि? न कदापि तस्या पत्रादि प्रापय एतान्? नैते शर्कराजल सेवितुमेना प्राप्ता? प्रात, सायम्, अपराह्णे, रात्रौ वा, न कदाप्यागता एते? ब्रूहि तर्हि मचरणौ स्पृष्ट्वा 'नैते कदाचन अस्मद्गृहम् आगता ' इति ।

भादव्य —किन्तु भर्त । भवतोऽनल्पकथनेन को मे लाभ? नैते सलाप, न चैतेषा दर्शनम्, न पत्रादिप्रापणम्, किं बहुना—न कोऽपि व्यवहार एते सदृत । अयमह भवच्चरणौ स्पृष्ट्वा वदे । यदि पुनरसत्य मद्वचनम्, भवच्चरणयोरेव दग्ध स्याम्।

फाल्गुनराय —भादव्य! यदि शपथवचनैरीदृशै सत्यमेव हस्तौ दग्धौ अभविष्यताम्, तदा विशालेऽस्मिन् जगति, नैकोऽपि मनुष्यो दृष्टिपथ मागमिष्यत्। भस्मसादेव सर्वेऽभविष्यन्। यदि न पुरुषा, स्त्रिय सर्वा एव, ध्रुव लोकान्तर प्राप्स्यन्।

भादव्य —मया प्रत्यक्षीकृतमेतत् । अस्मद्ग्रामे अविशाल एको मिथ्या-शपथमुदघोषयन्। तदाप्रभृत्येव, अर्धे तस्य अविघनस्य, तत्रैव मृत्युना प्राधीकृतम्।

फाल्गुनराय —आस्ता तत्। आदौ तावत्कथय मे, प्रस्तुतमधिकृत्य किं त्वं जानासि ? कथय सत्यम्। यदिच्छसि तत्प्राप्स्यसि। सुन्दरं गृहं विरचय्य तुभ्यं दास्यामि, भूमिं च तेन सार्धम्। किं तया ते दत्तम्? सहस्रगुणितमधिकमहं ते प्रयच्छेयम्। तत्कथय, क एष महाभाग?

माधव —भर्तः ! अपि सत्यमेव कथयेयम्? पित्रा मे शप्त्वा भणामि 'नात्र विषय किञ्चिदपि जानामि।' इति श्रुत्वा यथा भवते रोचेत, तथा दण्डधतामय दास।

फाल्गुनराय —भवतु। मा कथय। अपि तु सुनिश्चितं जानीहि यन्नैतत् अप्रकाशं स्थास्यति। (निष्क्रान्तो माधव।)

गीतम्। (का न मुरलि)

को नु जगति मे हितोऽवशिष्ट। स्त्रीपुरुषा गृहपशवो विमुखाः।
भृत्या धूर्ताः, स्त्री परनिरता। शुना विस्मृतं रक्षणकार्यम्॥ १॥

भृत्य —(प्रविश्य) अपि अयमेव निवासः फाल्गुनराय-महोदयानाम्?

फाल्गुनरायः—आम्, अयमेव। किं ते कार्यं ते?

भृत्य—न ते। अभ्यन्तरे तु तव गृहिण्या मे प्रयोजनम्।

फाल्गुनराय —(स्वगतम्) प्रथममेव खलु, आसीदेतदुत्प्रेक्षितं मया। यत, उपस्थिताया सौभाग्यवत्या, कस्य पुनः मया प्रयोजनं किंचन स्यात्? साम्प्रतं यावदहं पश्यामि, प्राय स्त्रीभिरेव सर्वेषां प्रयोजनम्। (प्रकाशम्) भवतु। अवगतं मया। अथ केनासि प्रेषित ?

भृत्य —तत्र शयुधानस्य कोणे-किन्तु, आशप्तोसि नामधेयं न कथनीयम्' इति।

फाल्गुनराय —(रूप्यकं हस्ते गृहीत्वा) गृहाण इदम्। अथ यदि कथयसि नामधेयं कथं तत् स्वामी ते जानीयात्?

भृत्य —(स्वगतम्) स्वयमेव एतेषां कथनम्। कुतः स्वामी एतान्प्रष्टुमा गच्छति? (प्रकाशम्) भर्तः ! किं खलु रूप्यकेणानेन? किन्तु-अथवा, यथा भवते रोचते। शन्युपवनस्य कोणे निवसन्ति श्रावणभद्रिन। तै तैः पत्रमिदं फाल्गुनराय महोदयाना पत्न्यै प्रेषितम्।

फाल्गुनरायः—एवम्, एव नु इदम्। तर्हि, अहमेव फाल्गुनरायः। पत्नी मे बहिः क्वचन गता। तत्, देहि तत्पत्रम्।

भृत्यः—आर्य! मा तावत्। तस्या एव देयमित्यादेशः।

फाल्गुनरायः—(रूप्यकद्वय प्रदर्श्य) गृहाणेदम्, कथय च स्वामिने 'फाल्गुनराय-पत्न्यै एव दत्त पत्रम्' इति। पत्र पत्न्यै वा दत्त, पत्ये वा दत्तम्, समानमेव। प्रतिनिवृत्तायै तस्यै, समर्पयामि इदम्।

भृत्यः—(स्वगतम्) तत्रापि कः प्रत्यवाय? किं पत्न्याः पत्रेण भर्तुः! दास्यत्येव स तत् तस्यै। कस्मादह रूप्यकलाभाद्वञ्चयाम्यात्मानम्? अहो औदार्यं सुजनस्य अस्य। (प्रकाशम्) आर्य! (रूप्यकद्वयमादाय) तदीयतां तावत्पत्रमिदमार्यायै। साधयाम्यहम्।

फाल्गुनरायः—साधय! दास्यामि इद तस्यै। त्व तावद् भर्तुरेवमेव निवेदयिष्यसि नु 'गृहस्वामिन्यै दत्तं मया पत्रम्' इति? अन्यथा-अथ साधय।

भृत्यः—यथाज्ञापयत्यार्यः। (निष्क्रान्तः।)

फाल्गुनरायः—तदिद श्रावणश्रेष्ठिनः पत्रम्। (उद्घाटयितुमारभते।) कुतो मत्पत्न्यै प्रेषितम्? किमर्थम्? तेन अस्याः कः सम्बन्धः? कोन्वसौ अस्याः? 'नामधेय च न कथनीयम्' इत्यादेशः। यदि पत्रमेतद् अशुभ, कस्माद्विभृतमेतरणम्? तन्निश्चितमेव न कुशलमेतत्। नूनं रहस्यगर्भमेतत्। शिक्षितास्तावत्स्त्रियः ईदृशं पत्रव्यवहारमारभन्ते। भवतु। किं लिखति महाभाग? 'सविशेष विज्ञाप्यते यत्-भवदीय पत्र प्राप्त मया। सौभाग्यवती मया मातृगृह प्रेषिता। मासार्धादनन्तर प्रत्यागमिष्यति सा। अत उत्तरमिद लिखामि, यद् भवत्या उपस्थापित प्रश्नमधिकृत्य, न कस्यापि चिन्ता करणीया। स्वाती खलु विश्वसनीया दासी न। भवती, भवत्या भर्ता च, इत्यनयोर्न किमपि कूट-प्रकरणमुद्भविष्यति। एतावता यदवधारणीय तदवधार्यताम्। किमतोऽधिकेन लिखितेन? इत्यलम्।' इति एव न्विदम्? सौभाग्यवती मया मातृगृह प्रेषिता। ननु कुतः? अन्यथा, अस्या विघ्नः स्यादिति। "प्रत्यागमिष्यति सा मासार्धादनन्तरम्।" आम्। तावन्त काल तावत्

साधित स्वैराचार'। "उपस्थापित प्रश्नमधिकृत्य, न स्वल्पापि चिन्ता करणीया।" आम्, ननु कुत करणीया ? को द्रक्ष्यति ? को वा शास्यति ? तदवगतम् क' प्रश्न इति, कुतो वा न चिन्ता करणीया इत्येतदपि। भवतु। किं तत पर भणति महोदय ? "स्वाती विश्वसनीया दासी" इति ? आम्, कार्यशतानि तयाऽदयावदुपादितानि स्यु, पारितोषिकाणि च प्राप्तानि स्यु। अनन्तरम् 'न कस्यचित्कृटप्रकरणस्य उद्भव सम्भवनीय, एतावता यदवधारणीय तदवधार्यताम्।' इति। किमवधार्यताम् ? इदमेव, यदनया सुवासया स्वल्पकृतया देवदर्शनमिषेण गृहान्निर्गन्तव्य, ततश्च मार्गविपर्ययेण, कार्तिकनायमगत्वा श्रावणश्रेष्ठी स प्राप्तव्य। अहो उदार कल्प। ननु भणामि, 'गम्यतामिदानीम्।' अपि पत्रमिद गृहीत्वा पश्यामि श्रावणश्रेष्ठिनम् ? अथवा, नैव पश्येयम्। नेदृशो वाममार्गं अस्माभिराश्रयणीय। सम्प्रति हि प्रमाणादनन्तर प्रमाणम् इति प्रभूता प्रमाणोपलब्धि। इद चित्रम्। इद पत्रम्। इतोऽप्यधिक तितिक्षया लभ्येत। साम्प्रत तर्हि, एव विधेयम्। येय विश्वसनीया दासी सा द्रष्टव्या, प्रभूतेन धनदानेन स्वपक्षपातिनी कर्तव्या। दृष्टमात्रे धने, स्वीकुर्यादेव पक्ष न ? ततो निभृतमेव सर्वमेकैकशो ज्ञातव्यम्। बाढम्। कुतो निश्चय। परम्-किं परम् ? अरे भादव्य ! भादव्य ! इतस्तावत्। मुहूर्तात्प्राक्, 'विश्वसनीयोऽहम्' इति प्रकाममजल्प। तदयमद्य परीक्षे ता तव विश्वसनीयताम्। अपि, अस्ति ते सिद्धता ?

भादव्य—आम्, भर्त ! विश्वास्योऽय दासो न बिभेति कुतश्चन। तर्हि विशुद्धिर्मे सत्यता निकषे।

फाल्गुनराय—आदौ तावत्प्रष्टव्योऽसि 'अपि स्वातीनामधेया दासी परिचितास्ति ते ?' इति।

भादव्यः—आम्, भर्त ! अस्ति मत्परिचिता। सा खलु रोहिणीं द्रष्टु मुहुर्मुहुरागच्छति।

फाल्गुनराय—(स्वगतम्) अस्य परिचिता, आगच्छति च मुहुर्मुहु, रोहिणीं द्रष्टुम्। तदेतत् सुखेन सूत्र संगच्छते। (प्रकाशम्) अस्तु। त्व तावन्निभृत तां पश्य कथय च 'अद्य प्रदोषे, अस्पष्टे मुखदर्शने, अविशार्त

केनचित् तस्य निवासस्य आम्रराज्यां, मे स्वामिन पश्य' इति। परम-चातुर्येण सर्वमेतत्साधनीयम्।

भाद्रव्य —भर्ते ! करिष्यामि भवद्वचनम्।

फाल्गुनराय —न तु रोहिणी इद जानीयात्। यत सा तस्याः पक्षपातिनी। अपच—न तु इदानीमेव ते कथयामि। न सा केनापि द्रष्टव्या। तद्गच्छ सत्वरम्। यथादिते त्वयास्मि कार्ये—तत्तु प्रागेव कथित मया। किन्तु, पश्य तावत्, इत एहि। अधिक किंचित् कथनीयम्। सम्यगाकर्णय। तस्या मम च, कचन विषयमुद्दिश्य रहसि सम्भाषण भविष्यति। यदि भार्याया मे इत किंचन कर्णगोचर स्यात्, तर्हि विनष्टमेव सर्वमवगच्छ। अतस्तां ब्रूहि 'सुष्ठु सावगुण्ठना निर्दिष्ट स्थल भाम्य तिष्ठ' इति। अप्यवगत त्वया ? अवगुण्ठन कृत्वा तया आगन्तव्यम्।

भाद्रव्य —भर्ते ! यदि तु अवगुण्टन कृत्वा आगच्छेत् अधिकमेव तत् सशयकारण भवेत्।

फाल्गुनराय —न हि न हि। नूत तद्गता शलसिर्न त बुद्धिपथमवतरेत्। अवगुण्ठनम् आवश्यकमेव। किं तवैतेन ? यथादिष्ट समाचर।

भाद्रव्य —भर्ते ! यथादिष्ट तर्हि कार्यं साधय प्रत्यागच्छामि। (निष्क्रान्त ।)

फाल्गुनराय —यदि योऽनेन साध्येत-सहस्रमुखे साध्येतैव—तर्हि, किं तत ? यदि नाम, सपूर्णे नगरे, न ताम् उपहासस्य परा काष्ठामध्यारोपयेय, तदा नामापि स्वक परिवर्तयेयम्। भवतु। गच्छामि तावत् नगरसचाराय। यदि दृष्टोऽय चोर, तदा शोभनमेव तत्स्यात्। अन्यथा, तावन्मात्र कालयापन स्यात्। (निष्क्रान्त ।)

---

## द्वितीयः प्रवेशः ।

### (स्वगृह-मार्ग)

(ततः प्रविशति आषाढश्रेष्ठी, तत्सुहृद्वैशाखश्रेष्ठी च ।)

वैशाखश्रेष्ठी—एतर्हि यथेष्टिमेव ते भवतु। तत्कस्मात्पुनरेवम् अवगमन् ? तावदीर् उरस्ता दन्ती प्रपय ननु, विकसितवदनो त्वया गम्यते।

**आश्विनश्रेष्ठी**—(स्वगतम्) प्राप्ता मल्ली इति सत्यमेतत्। किन्तु, सा विषवल्ली निष्पद्येत इति लक्ष्यते।

**वैशाखश्रेष्ठी**—किं न किमपि भाषसे ! अथवा, मनसि मोदसुधां पिबन्, मत्समक्षं तावदेवं नाटयसि दुःखम् ! किन्तु, सुहृदः सकाशान्निगूहनं वास्तवस्य मोदस्य, न मोदावहम्।

**आश्विनश्रेष्ठी**—त्वत्तः हर्षः निगूढः, इति स्मरसि कदाचिद् वृत्तपूर्वम् !

**वैशाखश्रेष्ठी**—न स्मरामि। तत्कथय कुतो मुखमेवं भाति !

**आश्विनश्रेष्ठी**—ह्यः किल सकला रात्रिर्जागरत एव मे व्यतीता। तस्मात्कदाचिद् भवेन्मुखमेवम्। आसीद् ह्यः सत्यनारायणः।

**वैशाखश्रेष्ठी**—सत्यनारायणः ! कुत्र ! तत्र तेषां गृहे ! हस्ततालं तर्हि देहि। किमुद्दिश्य सत्यनारायणस्य पूजा, इति ज्ञातं भवता ! ननु, पूर्णाः मनोरथाः, इति हेतोः।

**आश्विनश्रेष्ठी**—यस्य कस्य पूर्णाः मनोरथाः, भवन्तु ते तथैव।

**वैशाखश्रेष्ठी**—कुतः यस्य कस्यचित् ! ननु युवयोः मनोरथाः-तव च तस्याश्च-परिपूर्णाः। कुतः पुनरिदमौदासीन्यम् ?

**आश्विनश्रेष्ठी**—मम तावन्नैव सफलाः संवृत्ताः मनोरथाः। तस्याःपूरिताः वा, न वा, इति न ज्ञायते।

**वैशाखश्रेष्ठी**—(स्वगतम्) अन्यदेव किंचित्प्रस्तुतमिदं दृश्यते, विपरीतमेव। (प्रकाशम्) आश्विनश्रेष्ठिन्। आस्तां तावदयं परिहासः। कथय परमार्थतः, किं किं ह्यः समवर्तत !

**आश्विनश्रेष्ठी**—कथयामि, न तु श्रवणादनन्तरम् अकारणः उपहासो मे कार्यः। श्रूयतां तर्हि। ह्यः सत्यनारायणस्य हेतोः रेवत्याः गृहं गतः। किन्तु परिचितः समानः स्नेहभावश्च नानुभूतौ। ये तत्रागता इतरेजनास्तेषां मध्ये, अहमपि अन्यतमः। यत्र ते उपाविशन्, तत्रैवाहमपि उपविष्टः। तेषु उत्थितेषु, अहमपि उत्थितः। प्रतिनिवृत्तश्च गृहम्।

**वैशाखश्रेष्ठी**—ततस्ततः।

**आश्विनश्रेष्ठी**—अरे अनुरागगमकं न ताम्बूलमपि। किं पृच्छसि

'ततस्तत' इति ! एका एव साधारणी सामग्री सर्वेषां कृते । अन्येभ्यः मत्तेभ्य एव एकं ताम्बूलं ममापि दत्तम् । तदपि शुष्कम् ।

वैशाखश्रेष्ठी—ह्यः खलु सुमहान्सम्मर्द आसीत् । तन्निमित्तं जातं स्यादनवधानम् । अपि पूजासमाप्तौ, आसीत्कस्यचिद् गानम् ?

आश्विनश्रेष्ठी—आम्, तदेव । प्रसादवितरणसमये तावदनुच्चैः कथितवती 'प्रातःकालं यावत्, अद्य गानं प्रवर्तेत । तद्यथा इष्टं, तथा क्रियताम्' इति । ननु, एतावदेव ! अतोऽधिकं न अक्षरमपि निःसृतं तन्मुखात् ।

वैशाखश्रेष्ठी—कोऽत्र तस्याः प्रमादः ? भवतः किमभीप्सितम् ? सर्वेषां जनानां समक्षं तया--

आश्विनश्रेष्ठी—आस्तां तावत् । अलं विस्तरेण । तव तु मय्येव आक्षेपः स्यादिति अनुमितपूर्वमेव मया । तिष्ठ तावन्मुहूर्तम् अत्रैव । सुवर्णकारस्य सकाशात् अङ्गुलीयकं गृहीत्वाऽऽगच्छामि । ( निष्क्रान्तः । )

वैशाखश्रेष्ठी—अतीव संशयशीलः खल्वयं जनः । अन्यथा, नानेन तुल्यः कश्चन सौहार्दे । समर्पयिष्यति प्राणानपि मित्रस्य कृते । मतिस्तु परम-चञ्चला अस्य । इदानीम् अस्य मतेन सुजनोऽहम्, मुहूर्तादनन्तरं तु स्यामेव तथा, इति न निश्चितम् । अविद्यमानानि कारणान्युद्भाव्य शश्वत् संशयराशैर्निगडित एव भवेत् । अयमपि प्रकारविशेष इति आख्येयः । अथ कोऽयं महाभाग इत आगच्छति ?

( ततः प्रविशति फाल्गुनरायश्चित्रहस्तः । )

फाल्गुनरायः—मनुष्यवर्षं कृत्वा पलायितम् अज्ञातं पुरुषं, विनापि गमकेन केनचित्, एतावता कालेन निश्चयं प्रत्यानेष्यम् । किन्तु महाभागस्य अस्य चित्रे हस्तगतेऽपि, नायं मम हस्ताभ्यासमायाति इत्यहो आश्चर्यम् । कः खल्वयम्, अत्रस्थितः समभितः परिभ्रमन्दृश्यते ? पश्यामि तावत् मुखाकृति-धारकस्य भवति वा न वेति । ( उपसृत्य ) किन्तु, किमधिकृत्य सम्भाषण-मनेन आरभे ? ( प्रकाशम् ) भो कृपया तावत् ( अङ्गुलीयकम् अङ्गुल्याः अवतार्य ) कथयतु भवान्, कियन्मूल्यं भवेदस्य रत्नस्य ? ( अङ्गुलीयकं तस्य हस्ते समर्पयति । ) अनुमानेन, किन्तु यथासम्भवं निश्चितमेव, अस्य मूल्यं ब्रुवन्तु भवन्तः ।

वैशाखश्रेष्ठी—(अङ्गुलीयकम् आदाय) नाहम् अभ्यस्तो रत्नपरीक्षायाम्। तथापि—निरीक्षे। मूल्यम्—अस्य रत्नस्य—

फाल्गुनरायः—(चित्रं चावलोक्य) नासिके तावत् सदृशे दृश्येते, भ्रुवौ पुनः—(निरीक्षितुमारभते।)

वैशाखश्रेष्ठी—अपि एतत्सुवर्णापणात् क्रीतम्?

फाल्गुनरायः—आम्, सुवर्णापणादेव। भवतो मतेन किमस्य मूल्यं निर्धारितम्?

वैशाखश्रेष्ठी—तदेव चिन्तयामि। मूल्यम्—(निरीक्षितुमारभते।)

फाल्गुनरायः—न नयनेऽपि संवदतः। यदि 'न संवदतः' इति कथनीयम्—तर्हि, एवम् इव पश्यामि। (द्रष्टुमारभते।)

वैशाखश्रेष्ठी—अनुमानबलेन स्थूलतस्तावत्कथयामि। पञ्चशतरूप्यकं यावत् स्यादस्य मूल्यम्। शतार्धमधिकं न्यूनं वा। (पुनः पश्यति।)

फाल्गुनरायः—(स्वगतम्) निश्चितम्। नैव किंचिदपि संवदति। सर्वथा विसदृशी नन्वस्य मुखाकृतिः।

वैशाखश्रेष्ठी—आम्, तावन्मात्रमेव मूल्यमस्य पञ्चशतरूप्यकावधिकम्।

फाल्गुनरायः—आम् पाञ्चशतरूप्यकादतिदूरमिदम् इति भणितव्यम्। इदं रत्नं मया सार्धद्विशतरूप्यकैः क्रीतम्।

वैशाखश्रेष्ठी—अपि सार्धद्विशतरूप्यकैः? उत्तमस्तर्हि क्रयः। (अङ्गुलीयकं समर्पयति।)

आश्विनश्रेष्ठी—(सम्भ्रान्तः) वैशाख! गतः समयो मम कार्यम्। तदेहि, एनमाधरात्रि-निरतम् अतिक्रम्याव।

फाल्गुनरायः—(स्वगतम्) 'आधरात्रि-निरतम् अतिक्रम्याव'? [illegible]। न [illegible] [illegible]-पञ्चदश-[illegible] [illegible] सार्धं [illegible] एकाकि [illegible]। [illegible] उपाय [illegible]। [illegible]

आश्विनश्रेष्ठी—(प्रविश्य) वैशाख ! अभ्यागच्छसि नु ? तदेहि तावत्। यदि कदाचिद्देवदर्शनार्थं गता स्यात्, तदा तथापि मिलनं भवेत्। (उपांशु वदतः।)

फाल्गुनरायः—'तथापि मिलनं भवेत्।' देवालयं गच्छन्त्या तया मिलनं यस्य कस्यापि सुलभं स्यात्, इति अस्मात् मद्यशाखि अधिकतरं मालिन्यम् आवहन् कः खलु कलङ्कः ! किन्तु, अस्य तावन्मुखाकृतिं सुनिपुणं निरीक्षे।

वैशाखश्रेष्ठी—हंऽ ! ननु धन्योऽसि। सर्वथा छन्दानुवर्ती दृश्यसे। किं क्षणात्प्राग्भणितं, किं चैतत्संप्रति भणसि ? अस्ति वा द्वयोः संवादलेशोऽपि ?

आश्विनश्रेष्ठी—(अग्रतः सरन्) ननु नास्ति। तत्र इदं कारणम्। (तस्य कर्णे जपति।)

फाल्गुनरायः—(स्वगतम्) अस्यैव दृश्यते चित्रम्। किन्तु, एकस्थानस्थितस्य मे नेदं सम्यग् दृग्गोचरं भवति। एतां तावद्युक्तिं योजयिष्ये। "परनारी खलु, विषमयचषकः। व्यसने तस्मिन् सक्तो मा भूः।" (इति गुञ्जन् चित्रं तन्निरीक्षमाणः परिक्रामति।) इमे नेत्रे तावत्संवदतः। "परनारी खलु, विषमयचषकः।" इयं नासिकाऽपि तथा सदृशी। "व्यसने तस्मिन् सक्तो मा भूः।"

वैशाखश्रेष्ठी—(आश्विनश्रेष्ठिनं प्रति) भोः ! एतत्तु मया प्रथममेव चिन्तितम्। यतो, यदि स्थिरा ते मतिरभविष्यत्, तदा किं खलु न प्राप्स्यः ?

आश्विनश्रेष्ठी—एवं तावद्भवन्मतानुसारेण। किन्तु, यदि मां पृच्छसि, तदा हरिरेव तस्याः साक्षी। पश्य तावदिदम्। (कर्णे जपति।)

फाल्गुनरायः—वर्णः समानः, भ्रुवौ सदृश्यौ, मुखाकृतिस्तुल्या, ननु सकलमपि संवदति। मुखं स एव, स एव भयम्। "परनारी खलु विषमयचषकः।"

आश्विनश्रेष्ठी—वैशाख ! कोऽनुसरत्ययं, यो निरीक्ष्य, गुणयन्, पुनर्निरीक्षते, पुनर्गुञ्जति ? कोऽयम् ?

वैशाखश्रेष्ठी—अस्ति कश्चिद् आगन्तुकः। तिष्ठतु शृणु।

फाल्गुनराय —'परनारी खलु विषमयचषक ।" इति गुञ्जति मयि, नून परिवर्तितोऽस्य मुखभाव ।

वैशाखश्रेष्ठी—ईदृशा आत्मनस्काना स्वैर सञ्चार न प्रतिषिद्ध, इति अनिष्टमेतत्। कदाचिदनेनैव वर्षेन एतेषा भ्रम । अपि दृष्ट कथमसावव लोकयतीति ? आकृतिस्तस्य शोभना ।

फाल्गुनराय —स एव, स एव, ध्रुव स एवायम्। दृश्यतामसौ कपोलवर्ती तिल, अयमत्र तिलश्च। वामस्य नेत्रस्य अधस्तात्, वामस्य नेत्रस्य अधस्तात्, कपोलस्य किञ्चिदुपरिष्टात्' परनारी खलु विषमयचषक ।"

आश्विनश्रेष्ठी—वैशाख ! शृणु। परनार्या कयाचित् उन्मादितोऽयम्।

फाल्गुनराय —(स्वगतम्) इद तावद्वृत्त सवृत्तम् । इदानीं सम्भाषण निमित्तं किंचिदुद्भाव्य, तत्समीपे गत्वा, अवधार्य शादस्यम्। (उपसृत्य उभाववलोकयन्) भो महाराज ! अस्मिन्वर्षे क्रान्तिसम्भवोऽस्ति, इति कथ्यते। अपि सत्यमेतत् ?

आश्विनश्रेष्ठी—(हसन्) क्रान्ति ! कुत क्रान्ति ! शान्तिरेव सर्वत्र । वैशाख ! एते क्रान्तिकारका केचन दृश्यन्ते।

वैशाखश्रेष्ठी—अपि, मुहूर्तात्प्रकृ, रत्नस्य मूल्यमेव मा पृच्छस्तस्थौ।

फाल्गुनराय —सर्वा रेखा, सर्वेऽपि तिलाश्च सर्वथा परस्परसमाना । "पर नारी खलु विषमयचषक ।" (गुञ्जति)

आश्विनश्रेष्ठी—अरे ! किमस्य देवानां प्रियस्य सपर्केण ? यदि, साधयावस्तावत्।

वैशाखश्रेष्ठी—तदेहि, नैषा पाषाण-प्रक्षेपिणी उन्मत्तता, अपि तु सौम्या, रोचकैव भवति। (प्रस्थितौ।)

फाल्गुनराय —(स्वगतम्) ननु दृश्यता प्रस्थितोऽयम्। एष नूनम् अपसि मीर्गति। अयमेवासौ शठ। पत्नी मे प्रतिकृतिरात्मन, अनेनैव समर्पिता। किन्तु कथं खलु नाम नाम चास्य जानीयाम् ? (प्रकाशम्) भो स्थीयतां क्षणम्। अपि च यदसि प्रभुकाम:, तत्कृपया-अपि 'मार्गशीर्षश्रेष्ठी' इत्यभिधान भवत ?

आश्विनश्रेष्ठी—( हासित्वा ) किं 'मार्गशीर्षश्रेष्ठी'! न हि, न हि। मम नाम 'आश्विनश्रेष्ठी' ति। कुत पृच्छा!

फाल्गुनरायः—न निमित्तविशेषः कश्चन। तथापि- अस्तु इदम्। अपि अस्ति भवत: भ्रातुस्तावदिदं मया उच्यमानं नाम?

आश्विनश्रेष्ठी—न मे भ्रातु', न मम, न मे पितृव्यसुतस्य न पुनः पितृव्यस्य वा। अस्माकं कुटुम्बे नैतत्कस्यापि नाम।

फाल्गुनरायः—मया पुनरनुमितं तत्तस्यादिति। यतः महाशया एते परम-सुहृदः खलु मे। उभयोर्वो मुखाकृती प्रायः सदृशः। अतः पृष्टवान्। अस्ति मत्समीरे चित्रमेकं तेषाम्। यदि कृपया सहेत क्लेशः, तुलयामि तावत्।

आश्विनश्रेष्ठी—वैशाख! तदेतौ धनिदयायैव ग्रस्तौ आवाम्। तत्तुलयतु भवान्। ( फाल्गुनरायः प्रयुनारभते। ) अपि, अस्ति किंचित् सादृश्यम्?

फाल्गुनरायः—ननु भवतामनुग्रहीनः स्याम्, यदि भवन्तो वदनं किंचित्परिवर्तयेयुः।

वैशाखश्रेष्ठी—( हसित्वा ) भो मान्यवर! श्रेष्ठिप्रमुख! धनिकवर्य! अलमनया पीडया। अनुमन्यतां तावदस्मद्गमनम्। तर्हि प्रचलतु भवान्। किमस्य भ्रान्तमनस छंदानुवर्तित्वेन? आगच्छतु भवान्। अय पुनरमणी-भ्रान्तचेतसाम्। ( हसन् ) भो धर्मशाला तावदाश्रीयतां काचन।

फाल्गुनरायः—( स्वगतम् ) उभावपि मामवलोक्य हसत:। हसता भवन्तौ। न युवामेव केवलं, सकलं नगरमेव प्रहसिष्यति मामचिरात्। सम्प्रति, यदि एवमनुष्ठीयेत? ( प्रकाशम् ) भो दृश्यताम् चित्रमेतत्। ( स्वगतम् ) अथवा मा तावत्। ( निगूहति। )

आश्विनश्रेष्ठी—अपि किंचिदिदम्? ननु यन्मया रेवत्यै दत्तं तेन चित्रेण सदृशमिवैतत् भाति। कथमिदं सूचम्? अनर्थः खलु उपस्थित'। यदि तदेवेदं स्यात्-( श्लोकमये स्मरति। )

फाल्गुनरायः—( स्वगतम् ) अहो! नूनं मर्मैव विद्धमनेन शरेण। नन्वतो महाभागो निकटतरं प्राप्तु प्रवृत्त। प्रायो मम हस्ताचित्रम् अपहर्तुकामो दृश्यतेऽयं महाभागः। अपहरतु तावत्। तदिदं कञ्चुकस्य अन्त पुटे एव

सुरक्षितं निदधामि। ननु चित्र! गच्छ, वस च तत्र। (चित्रं कञ्चुकस्य अन्तःपुटे स्थापयति।)

आश्विनश्रेष्ठी—तदनेन निहितमन्तःपुटे। वैशाख! ननु भ्रष्टबुद्धिरिति निर्दिष्टोऽयम् असदबुद्धिमेव भ्रंशयिष्यति।

वैशाखश्रेष्ठी—(मन्दस्वरम्) त्वं तावज्जिह्वायां मधु स्थापय। तेन संपाद्येत कार्यम्।

फाल्गुनरायः—(स्वगतम्) मिथोमन्त्रणं किंचिदुभयोः संजातम्। इदानीं जङ्घाबलमेव श्रेयः।

आश्विनश्रेष्ठी—भो. कृपयैकवारम्—

फाल्गुनरायः—(ससंभ्रमम्) जयतु गोपालः, जयतु गोपालः।

आश्विनश्रेष्ठी—एकवारमवलोक्य प्रतियच्छामि।

फाल्गुनरायः—किमवलोक्य प्रतियच्छति भवान्?

आश्विनश्रेष्ठी—चित्रं तत्, भवतः करगतमेव अवलोकयामि।

फाल्गुनरायः—चित्रम्? न हि न हि। क्षुद्रमेतत्। चित्रकारबटुकेन व्यर्थमेव पटके वर्णाः अत्र तत्र विकीर्णाः।

आश्विनश्रेष्ठी—पुटाभ्यन्तरतः बहिस्तावदाकृष्यताम्। पश्यावः कीदृशं तत् इति।

फाल्गुनराय—(ससंभ्रम धावन्) न हि न हि भवादृशान् महाभागान् क्लेशयितु नैवार्हतीदम्। अस्ति यथा तथैव।

वैशाखश्रेष्ठी—(सक्रोधमिव) तथापि किं न दर्शयन्ति भवन्तः क्षणमात्रम्? न खलु भक्षयिष्यावस्तत्। दृष्ट्वा प्रत्यर्पयिष्यावः। हुँ-दर्श्यतां तर्हि।

फाल्गुरायः—(स्वगतम्) इदानीं कलहैषिणौ खल्वेतौ। संप्रति वरं जङ्घाबलावलम्ब एव। अन्यथा, द्वौ इमौ। अहं पुनरेकाकी। (प्रकाशम्) भो अत्यन्तं विरूपमिदम्। तत् साधयामि संप्रति। जयतु गोपालः, जयतु गोपालः। न हि, न हि, इदानीं नास्ति मेऽवसरः। दर्शयिष्यामि पुनः कदाचन। जयतु गोपाल.। (धावन् निष्क्रामति।)

आश्विनश्रेष्ठी—ननु वैशाख! यन्मया रेवत्यै दत्त, तदेवेदं चित्रम्।

वैशाखश्रेष्ठी—ननु विपरीतमिदम्। कथं भणसि तदेवेदमिति ?

आश्विनश्रेष्ठी—अरे! चतुर्थे सत्यमेतत्। ममैव चित्रस्य आसीत्सादृशी स्वकृता चतुष्कोटिका।

वैशाखश्रेष्ठी—अरे! विपुलाः सन्ति परस्परसमानाः चतुष्कोटिकाः। किमन्यथा तर्कितैः ?

आश्विनश्रेष्ठी—सखे! नेदं तर्कितं, प्रत्यक्षं तु मयावलोकितम्। तया तच्चित्र छटायासौ प्रथमितस्यम न संशयलेशोऽपि।

वैशाखश्रेष्ठी—हुं। तदिदमारब्धं त्वया तर्कविरचितम् ननु। सावधानेन त्वया भवितव्यम्।

आश्विनश्रेष्ठी—किमिदानीं सावधानतया। ननु आपतित एवानर्थः। यदि प्रत्यायकं मद्वचनस्य आवश्यकं, तदा गतरात्रौ या मद्विषयका तस्या दुश्चिरभवत् वर्णितैव सा ते मया।

वैशाखश्रेष्ठी—(स्वगतम्) कः खलु उपायः अस्य प्रकृतेः ? केवलं चतुष्कोटितमां चतुष्कोटिकां दृष्ट्वा विकारमापन्नमस्य मस्तकम्। चरमसीमा नूनमिमां प्राप्ता अनेन तर्कविचेष्टितस्य। (प्रकाशम्) न तत्तव चित्रम्। यद्यपि वारयोषितायाः कन्या रेवती, तथापि नैव कापटिका।

आश्विनश्रेष्ठी—अरे! मैवं भण। तदेव तत्, नान्यत् किमपि चित्रम्। यस्य वस्तुनि, तस्य पणिष्ये। अन्ततो रेवती जातिगुणमेवानुसरत्-ननु अनिवार्यं हि तत्। कुतः ?

गीतम् (कोयलिया कोकु)

इयं मधुचपलवारपाङ्गना। साहस-दम्भ-लोभ-कपटानृत वचनान्। हास्यति किं स्वगुणान् ? ॥ ध्रु० ॥ प्रेमचित्रकं प्रत्तं तस्यै। तया तु दत्तं प्रियपुरुषाय। कुललीला हीदृशी। मानसं न पचते ॥ १ ॥

तदेहि तामेव गच्छावः। नान्यथा संशय-निरासो भवेत्।

वैशाखश्रेष्ठी—भो कुत ईदृशी त्वरा ? गच्छावो भोजनादनन्तरम्।

आश्विनश्रेष्ठी—आदौ तावन्निर्गयः, पश्चाद् भोजनम्। हन्त! सोऽयं मङ्गलो, मङ्गलो, मङ्गलो मां बाधते। (उभौ निष्क्रान्तौ।)

फाल्गुनरायः—(प्रविश्य) ननु प्रस्थितोऽयम्। अरे चोर! सर्वथा कलुषीकृतं त्वया मे वैवाहिकं जीवनम्।—

गीतम्। (तनय मुझा)

अधम! अकारि हि रक्षा मम सौख्यानां सर्वा॥ ध्रु०॥ गवेषणां ते कारयित्वा। मापयित्वा तदेनः। यापये तां गृहात्॥ १॥
(निष्क्रान्तः।)

---

## तृतीयः प्रवेशः।

(स्थलम्—रेवत्या गृहम्।)

(ततः प्रविशति रेवती, तस्याः सखी अनुराधा च।)

अनुराधा—बहूनेतान्दिवसान् आश्विनश्रेष्ठिनस्त्वां प्रति वारंवारमागमनम्, त्वया संलपनं च दृष्ट्वा, प्रागेवानुमितमासीत्, एतत्सर्वं मया। न तु मया एतच्चिन्तितं, यत् अनिवेद्य एव मे, एवमाचरिष्यसीति।

रेवती—अनुमतिस्ते प्रार्थ्येत, इति न मे प्रत्ययात्। अतः न निवेदितम्।

अनुराधा—ननु कथमहमनुमन्ये! हञ्जे, सत्यमेव कथयामि। बालिशलेऽध्यवसायः। सखि! एष ते धनार्जनस्य सुवर्णक्षणः। अस्मिन्नवसरे यदि पुरुषमेकमेव कञ्चन आश्रयसे, किमागामिनि काले करिष्यसि। वलिभिराक्रान्ते वदने, अपि लभ्येतायमवसरः?

रेवती—अथ प्रस्तुतस्त्वयायं विषयः, इति कथयामि।

गीतम्।

तनुविक्रयपापमहो! पापानामुचितं शिखरे॥ ध्रु०॥
स्त्रिया हि भूषा लज्जाविनयौ, कोमलमानसभावौ।
तौ संदग्धुं धनार्थमथ किं देवो ददाति जन्म?॥ १॥

अनुराधा—हञ्जे! प्रत्यहं नवैव सुषमा! न चिन्ताया लेशोऽपि। अहोरात्रं प्रमोदसेवनम्-न जाने, एतत्सर्वं विहाय, कुत एतद्ब्रह्मज्ञानं त्वयाधीतम्

इति। अथवा, किं मम कथनेन? सप्ताहमात्रेण स्वयमेव तावद्बुद्धिमा भविष्यसि। ननु भणामि, तव मातामह्या, किं बहुना, प्रमातामह्याः खलु कालादारभ्य सर्वा गणिकाव्यवसायमेव इमम् आचरन्। अपि मूढास्ता सर्वाः? ताभि तनुविक्रयपूर्वकमेव धनसञ्चय कृत। न वा? तस्यैव धनस्य हेतोरेतत्ते सकलमपि विलसितजातम्। किमत्र सविशेष साधित त्वया? सकलमेतत्परित्यज्य, यदि एकतन्त्रिकामाश्रिता विरागिणी त्व सर्वत्र परिभ्रमसि, तस्य तदा तेऽप्यवसाय गणयिष्ये। अयि, कस्यापि कथमपि विघ्न पीडा वा अनाचरन्त्यास्ते वित्तप्राप्ति, न कथमपि पापाय। प्रत्युत लोकमनोनुकूलैन तादृशी ते वृत्तिस्तेषामनुरञ्जनपुर सर सन्तोषणेन पुण्यमेव आवहेत्। अपि अवगत त्वया?

रेवती—अलम्, अलमेतै पापपुण्यप्रवचनै। एतावदेव ते कथयामि—

गीतम्। (दोलन मेंढे घर आवे)

निन्द्यजीवनरमणमिदम्। आमृत्योर्दिने निशि, सततमेकरूप
परिवर्तनहीनम् ॥ध्रु०॥ स्मितप्रहासे वितथ आर्जवम्।
तोषरोषदम्भनमुपरितनम् ॥ १ ॥

अनुराधा—हले तदपेक्षया समीचीनतरमेतत्कि न कुरुषे? इदानी बहुली भूतासु सर्वत्र शालासु, अस्मज्ज्ञातिकन्यकासु विवाहमोरव्यंमुद्भूतम्। तत्कि न परिणीतैव तेन भवसि?

रेवती—यदि तावत् न विवाहोऽथ, किमन्यत्?

गीतम्

लग्नविधौ ननु सत्य मर्म किमिति। अण्वपि नैत ज्ञात ते ॥ध्रु०॥
वैवाहिक-होम-मन्त्र-अन्त पटमक्षतादि।~
पोरकोऽय विधि, मिलन जीवयो सारभूत ध्रुवम् ॥ १ ॥

अनुराधा—भवतु तथा। त्वं खलु शिक्षिता वाक्चतुरा। कथ विवादे मया अतिशयितव्या? तेन हि भाविनमेष्ठिनो गृहिणी भूत्वा तावत्, भव सर्वथा सुखिनी। भवेदेव तथा सकलमपि तथादितम्। किन्तु, त्व मम सखीति कथयामि, षष्ठेष्ठी स विलक्षणमङ्गतिकः, इति श्रूयते। तत्सावधाना भव।

इदानीं गच्छामि । अतिक्रान्ता वेला । ननु पुष्पमाला ग्रथनीयाः । (गन्तुं प्रस्थिता ।)

**रेवती**—'पुष्पमालाः पुष्पमालाः' इति कथयसि । कियन्त्यो ननु ग्रथनीयाः ? सन्मुहूर्तमुपविश्य गम्यताम् ।

**अनुराधा**—(*दूरमवलोक्य*) *न खलु, एकाकिनीं त्वां विहाय गच्छामि । पश्य* तावत्, नूतनरते प्रभुः—ननु क्षम्यतां मम वाक्प्रमादः—एष ते पतिदेव एव आयातो नु ? अपि अस्मि वा, न वा, अनुज्ञाता गमनाय इदानीमपि ?

**रेवती**—ज्ञातम्, ननु ज्ञातं मया । अपि सायम् आगमिष्यसि ? गम्यतां तर्हि । (अनुराधा निष्क्रान्ता ।) न खल्वियं परिचिता आगमनवेला । क खल्वपरः सार्धमागतः ? वैशाखश्रेष्ठिन इति भाति । किन्तु मुखभाव एतेषां, विकृत इव दृश्यते । विगतायां रात्रौ सत्यनारायणपूजायां समर्दे न मया अवसरः प्राप्तः, एतेषां कुशलमपि प्रष्टुम् । अतः कुपिता आसन् । कोपस्य तस्य पर्युषितः शेषः, इदानीं गोचरीभवति । (ततः प्रविशति आश्विनश्रेष्ठी, वैशाखश्रेष्ठी च ।) आगम्यतां वैशाखश्रेष्ठिन् ! आसनमलङ्क्रियताम् । अद्य नूनं वातावरणम्, अत्यर्थं तप्तं नु ?

**वैशाखश्रेष्ठी**—आम् । चण्डातपहेतोः । किमन्यत् ? आतपात्यये स्वयमेव भवेच्छीतलम् ।

**आश्विनश्रेष्ठी**—(वैशाखं प्रति) अलमेतैश्छद्मवचनैः । अस्मिन्नेव क्षणे यद्यथा स्यात्तस्य तथैव निर्णयः सुस्पष्टः आवश्यकः । (निभृतं भाषते ।)

**रेवती**—मा खलु उच्चैः स्वरमुच्यताम् । ननु मन्दस्वरं भाष्यताम् । अन्यथा मच्छ्रुतिगोचरं स्यात् । ननु तीक्ष्णौ मे कर्णौ । अतो भणामि । अपि न बहिरवसरो लब्धः, रहः सल्लापाय ? प्रवर्त्यतां तर्हि । मुहूर्तं गत्वा प्रत्यागमिष्यामि । (गन्तुं प्रवृत्ता ।)

**वैशाखश्रेष्ठी**—न हि न हि । न तादृक् किंचन । हा, अनेन भवत्यै यच्चित्रं दत्तं, तद्, अवलोकयितुकामोऽस्मि ।

**रेवती**—अप्यस्ति विशेषः कश्चन, तस्य मत्समर्पणादनन्तरमेव दर्शने ? भवतु । यदि एतदेव मनीषितं, दर्शयामि तत् । नयने तावन्नातिमात्रं विस्फारिते स्याताम् । (चित्रं द्रष्टुं गच्छति ।)

वैशाखश्रेष्ठी—अप्यस्ति समाधानम् ! आश्विनश्रेष्ठिन् ! पश्य गता सा चित्रमानेतुम् ! प्रत्यर्पिते तस्मिन्, गमिष्यसि नि शेषमुपहासास्पदत्वम् ।

आश्विनश्रेष्ठी—भविष्याम्युपहसनीय, इति भाति । अहो मूर्खता मे अस्याम् अनुचित दोषमारोपयत ! भवतु यद्वृत्त, तद् वृत्तम् । तत्कृपया मा एतत्सम्बद्ध किमपि ता प्रति ब्रूया । नो चेत्, अपार एव मम उपहासो भवेत् ।

रेवती—अपि कथ नात्र पुटके ! कुत्र तन्निहितम् ! आम् स्मृतमधुना । हा, गृह प्रतिनिवृत्ता, ता काचकपाटका मञ्जूषामह गता । पश्यामि, तदुपरि वर्तते, न वेति । ( तत्र याति । )

वैशाखश्रेष्ठी—अल पुन अत पर विपरीतं सशयम् आश्रित्य ।

आश्विनश्रेष्ठी—न हि न हि । नात पर स्वप्नेऽपि सशय उदेष्यति । सम्यग्दण्डितोऽस्मि अद्य । अथ मा भापस्व । कर्णाग्र नन्वित एव तस्या । ननु पश्य ।

रेवती—( स्वगतम् ) कथ तन्नास्ति अत्रापि ! तत्कुत्र खलु निहितम् ! नैतत्, नात्रापि । किमधुना ! आं ज्ञातम् । ( प्रकाशम् ) भो महाभाग ! सनिश्चय ब्रवीमि यदिन्द्रजाल किमपि नेत्रसमोहनम् उद्भावितमिह भवता ध्रुवम् । अन्यथा कथमत्र निहित चित्रमेवमदृश्य जातम् ! वैशाख-श्रेष्ठिन् । भवतापि एवमेव मन्यते नु !

वैशाखश्रेष्ठी—ननु शपथपुर सर कथयामि, न आवयो सकाशे चित्रम् । भवत्यैव अन्विष्यतां कुत्र निहितमिति ।

आश्विनश्रेष्ठी—( वैशाखश्रेष्ठिन प्रति ) अपि अवितथ , वितथ वा, मम सशय ! निश्चितमेव हासमार्गी मम । कथमह मिथ्या सशय प्रकटीकरिष्यामि ! ( रेवतीं प्रति ) भवति ! नैव कृतोऽस्माभि समोहनप्रयोग ।

वैशाखश्रेष्ठी—( त नियम्य ) अरे ! परिहासविजल्पित स्यादिद तस्या । अतो भणामि, मा इदानीमेव भण । तिष्ठ तावन्मुहूर्तम् ।

रेवती—आश्चर्य । न जाने कुत्रागत हतकम् ।

आश्विनश्रेष्ठी—( वैशाखं प्रति ) शृणु तावत् । महता अनुरागेण प्रत्त मम चित्रं, ' हतकम् ' इत्यभिधीयतेऽनया । अपि एतन्महत्त्वम् असत्चित्रस्य !

इदानीं गच्छामि । अतिक्रान्ता वेला । ननु पुष्पमाला ग्रथनीया ।
( गन्तु प्रस्थिता । )

**रेवती**—' पुष्पमाला पुष्पमाला ' इति कथयसि । कियन्त्यो ननु ग्रथनीया ? तन्मुहूर्तमुपविश्य गम्यताम् ।

**अनुराधा**—( दूरमवलोक्य ) न खलु, एकाकिनीं त्वा विहाय गच्छामि । पश्य तावत्, नूतनस्त प्रभुः—ननु क्षम्यता मम वाक्प्रमाद —एष ते पतिदेव एव आयातो नु ? अपि अस्मि वा, न वा, अनुज्ञाता गमनाय इदानीमपि ?

**रेवती**—ज्ञातम्, ननु ज्ञात मया । अपि सायम् आगमिष्यसि ? गम्यता तर्हि । ( अनुराधा निष्क्रान्ता । ) न खल्वियं परिचिता आगमनवेला । क खल्वपर सार्धमागत ? वैशाखश्रेष्ठिन इति भाति । किन्तु मुखभाव एतेषा, विकृत इव दृश्यते । विगताया रात्रौ सत्यनारायणपूजाया समर्दे न मया अवसर प्राप्त , एतेषां कुशलमपि प्रष्टुम् । अत कुपिता आसन् । कोपस्य तस्य पर्युषितः शेष , इदानीं गोचरीभवति । ( तत प्रविशति आश्विनश्रेष्ठी, वैशाखश्रेष्ठी च । ) आगम्यता वैशाखश्रेष्ठिन् ! आसनमलंक्रियताम् । अद्य नून वातावरणम्, अयथे तप्त नु ?

**वैशाखश्रेष्ठी**—आम् । चण्डातपहेतो । किमन्यत् ? आतपात्यये स्वयमेव भवेच्छीतलम् ।

**आश्विनश्रेष्ठी**—( वैशाख प्रति ) *अलमतैश्छद्मवचनै । अस्मिन्नेव क्षणे यदथा* स्थानस्य तथैव निर्णय सुस्पष्ट आवश्यक । ( निभृत भाषते । )

**रेवती**—मा खलु उच्चै स्वरमुच्यताम् । ननु मन्दस्वर भाष्यताम् । अन्यथा *मच्छ्रुतिगोचर स्यात् । ननु तीक्ष्णौ मे कर्णौ । अतो भणामि । अपि* न बहिरवसरो लब्ध , रह सलापाय ? प्रवर्त्यता तर्हि । मुहूर्ते गत्वा प्रत्यागमिष्यामि । ( गन्तु प्रवृत्ता । )

**वैशाखश्रेष्ठी**—न हि न हि । न तादृक् किंचन । हा , अनेन भवत्यै यच्चित्र दत्त, तत्, अवलोकयितुकामोऽस्मि ।

**रेवती**—अप्यस्ति विशेष कश्चन तस्य मत्समर्पणादनन्तरमेव दर्शने ? भवतु । यदि एतदेव मनीषित, दर्शयामि तत् । नयने तावन्नातिमात्र विस्फारिते स्याताम् । ( चित्र द्रष्टु गच्छति । )

**वैशाखश्रेष्ठी**—अप्यस्ति समाधानम् ? आश्विनश्रेष्ठिन् ! पश्य गता सा चित्रमानेतुम् ? प्रत्यर्पिते तस्मिन्, गमिष्यसि नि शेषमुपहासास्पदत्वम्।

**आश्विनश्रेष्ठी**—भविष्याम्युपहसनीय, इति भाति। अहो मूर्खता मे अस्याम् अनुचित दोषमारोपयत। भवतु यद्वृत्त तद् वृत्तम्। तत्कृपया मा एतत्सम्बद्ध किमपि तां प्रति ब्रूया। नो चेत्, अपार एव मम उपहासो भवेत्।

**रेवती**—अयि क्व नात्र पुटके ? कुत्र तन्निहितम् ? आम् स्मृतमधुना। हा, गृह प्रतिनिवृत्ता, ता काचकपाटिका मञ्जूषामह गता। पश्यामि, तदुपरि वर्तते, न वेति। (तत्र याति।)

**वैशाखश्रेष्ठी**—अल पुन अत पर विपरीत सशयम् आश्रित्य।

**आश्विनश्रेष्ठी**—न हि न हि। नात पर स्वप्नेऽपि सशय उदेष्यति। सम्यग्दण्डितोऽसि अद्य। अथ मा भापस्व। कर्णाभ्र नन्वित एव तस्या। ननु पश्य।

**रेवती**—(स्वगतम्) कथ तन्नास्ति अत्रापि ? तत्कुत्र खलु निहितम् ? नैतत्, नात्रापि। किमधुना ? आं ज्ञातम्। (प्रकाशम्) भो महाभाग ! सनिश्चय ब्रवीमि यदिन्द्रजाल किमपि नेत्रसम्मोहनम् उद्भावितमिद भवता ध्रुवम्। अन्यथा कथमत्र निहित चित्रमेवमदृश्य जातम् ? वैशाख श्रेष्ठिन् ! भवतापि एवमेव मन्यते नु ?

**वैशाखश्रेष्ठी**—ननु शपथपुर सर कथयामि, न आवयो सकाशे चित्रम्। भवत्यैव अन्विष्यतां कुत्र निहितमिति।

**आश्विनश्रेष्ठी**—(वैशाखश्रेष्ठिन प्रति) अपि अवितथ, वितथ वा, मम सशय ? निश्चितमेव ज्ञातमासीन्मम। कथमह मिथ्या सशय प्रकटीकरिष्यामि ? (रेवतीं प्रति) भवति ! नैव कृतोऽस्माभि सम्मोहनप्रयोग।

**वैशाखश्रेष्ठी**—(त नियम्य) अरे ! परिहासनिःप्रसित स्यादिद तस्या। अतो भणामि, मा इदानीमेव भण। तिष्ठ तावन्मुहूर्तम्।

**रेवती**—नात्रापि। न जाने कुत्रागत हतकम्।

**आश्विनश्रेष्ठी**—(वैशाखं प्रति) शृणु तावत्। महता अनुरागेण प्रत्त मम चित्रं, 'हतकम्' इत्यभिधीयतेऽनया। अपि एत महत्त्वम् अस्मच्चित्रस्य ?

रेवती—(आश्विनश्रेष्ठिनं प्रति) सत्यमेव न लभ्यते कुत्रचिन्निहित तच्चित्र मया।

आश्विनश्रेष्ठी—नैव लभ्येत। अवगत मम।

रेवती—'अवगतम्' इति! (उपेत्य) दीयता तावत् यत्र कुत्र निहितम्।

आश्विनश्रेष्ठी—हुऽ। अलमिदानीमतैश्चाटुवचनै। नून नाय चाटूक्तिभि अनुनेय जन।

रेवती—अम्मो! इदानीं तावत् परमार्थेनैव कुपिता नु! बहुवदस्मि भीता। उच्यता तर्हि कुत्र तदिति।

आश्विनश्रेष्ठी—एव परिहासेनैव अपरान् प्राणैर्वियोजयन्त्यो नाम यूयम्। अपि जानीथ! केवल परिहासबुद्ध्यैव त्वया प्रत्त स्यात् तच्चित्रम्।

रेवती—कस्मै प्रत्त स्यात्!

आश्विनश्रेष्ठी—अहो इद तन्मुखपरावर्तनपटुत्व, स्त्रीसुलभ यदुच्यते। (रेवतीं प्रति) किं 'कस्मै' इति! यस्मै कस्मैचित्प्रत्त, तस्मै। तेषामेव च महाभागाना हस्तेऽद्य मुहूर्तात् प्राक्, दृष्ट तत्।

रेवती—हुँ! एतत्तावच्चैव सह्य मे। कस्मै दत्तम्! किं तस्य नाम!

आश्विनश्रेष्ठी—नाम प्रष्टु विस्मृतवानहम्। मुखाकृतिस्तु सम्यक् स्मर्यते मया। तदलमेतेन।

रेवती—(सहासम्) तेन हि परिहासमात्रमेतत्। प्रचलतु यथेष्टम्।

आश्विनश्रेष्ठी—हस। स्वैर हस। किन्तु, मा पुनर्विस्मर, यन्मयापि सर्वमिद क्षण शोधयितव्य भविष्यति।

रेवती—तत्प्रवर्त्यतामिदानीम्। नाह वचनेन अन्तराय करिष्ये। आम्, भवत उपहासार्थं प्रत्त मया तत् चित्रम्, एवमेव कल्प्यता भवता। अपि सन्तुष्टो भवान् अनेन!

आश्विनश्रेष्ठी—कुत 'कल्प्यताम्' इति! सत्यमेव प्रत्त त्वया चित्रम्। स्वयं मया एताभ्यां नेत्राभ्या दृष्टम्। न खलु लोकप्रवादः अयम्, श्रवण गोचरतां गत।

रेवती—वैशाखराय! एवमेव प्रचलेदिद कियन्त कालम्! तद् गच्छामि!

स्नानं कृत्वा, पूजा निर्वर्तनीया। दृश्यन्तां, तत्र काष्ठसूचीग्रथितानि ताम्बूलानि विहितानि।

वैशाखश्रेष्ठी—किन्तु, किंचित्—

रेवती—न हि, न हि। सामत नैव तत् आवश्यकम्। सर्वः खलु सम्यग्जानाति स्वकं जनम्। (निष्क्रान्ता।)

आश्विनश्रेष्ठी—पश्य पश्य वैशाख! पश्येमाम् उत्सेकप्रेरिताम् अवधीरणाम्। किं तावदाह तानि काष्ठसूचीग्रथितानि ताम्बूलानि तत्र वर्तन्ते। तौ युवयोः करौ, ते युवयोस्तुण्डे च। यदीष्टं सेव्यन्ताम्, यदि नेष्टं नैव सेव्यन्ताम्। अपि न एषैव व्यञ्जना भाषितस्य! तत्साधयतु सा कामम्! ज्ञाप्यतां च 'न आवां तथा प्रलोभितौ तत्र ताम्बूलैः' इति। तदेहि *प्रथमं तमेव जनमन्विष्याव*, पृच्छावश्च। किन्तु, वैशाख! सम्प्रत्यपि जातस्ते प्रत्ययो, न वा!

वैशाखश्रेष्ठी—न हि। नाद्यापि मे प्रत्ययो जातः। यतो न तस्या मुखे कैतवस्य लेशोऽपि दृश्यते।

आश्विनश्रेष्ठी—अरे न त्वं जानासि—

गीतम्। (ठुमक चलत)

नाट्यगान-निपुण-कलाचतुराया माया॥ ध्रु०॥
आन्तरिको भाव एक ऊर्ध्वतस्त्वन्य एव।
वृत्ती बहिरान्तरा च। भिन्नभिन्नच्छाये॥ १॥

समाप्तो द्वितीयोऽङ्कः।

# तृतीयोऽङ्कः।

## प्रथमः प्रवेशः।

( फाल्गुनरायस्य निवास । तत प्रविशति कृत्तिका। )

कृत्तिका—ह्य श्रावणश्रेष्ठिन पत्न्यै पत्र मया प्रेषितम्। अद्य प्रभात यावत्, विलम्बितमपि अपेक्षितमासीत्, तदुत्तरम्। किन्तु कथ न तत्प्राप्तम्? अथवा, अन्तरा एव केनचित् आच्छिन्न तत्स्यात्। कोऽसौ? माद्व्य? माद्व्य! कुत्र प्रस्थितोऽसि?

( तत प्रविशति माद्व्य । )

माद्व्य —स्वामिनि! आस्थाने तावदास्तरण प्रसारयितुम्।

कृत्तिका—इतस्तावदेहि मुहूर्तकम्। अय ननु महान्धूर्तहतक ।

माद्व्य —आज्ञापयतु स्वामिनी।

कृत्तिका—नैव त्व सत्य कथयिष्यसि तथापि पृच्छामि। अरे! ह्य, अद्य वा, अभ्यागत कश्चन मा प्रति पत्रमावहत्? 'न' इति निश्चितमेव उत्तरम्। कापटिक! अन्नब्राह्मणासि दास । तत्कथय।

माद्व्यः—यस्सत्य न जानामि, स्वामिनि! क खलु अपेक्षित आसीत्?

कृत्तिका—रे हतक! किं तव पृच्छयानया? यदेव पृष्टोऽसि, तदेव प्रति वचनीयम्। पृष्ट 'कोऽसौ यायप्रत ?' प्रतिभाषते 'कियानु अश्वो मूल्यत ?'-किं तवानेन प्रश्नेन? आसीदपेक्षित कश्चन श्मशानवासी।

माद्व्य —तर्हि, न कोऽप्यागत, स्वामिनि!

कृत्तिका—आस्ता तत्। अद्य प्रभाते, क्व त्व प्रेषित, एतै? कथय अवितथम्।

माद्व्यः—( स्वगतम् ) तेषामादेश 'न तस्यै किंचित् कथयितव्यम्' इति। एतासा पुनरादेश 'कथय अवितथम्' इति। द्वयोरादेशयोर्मध्ये ननु 'इत कूप, इतस्तडाग' इतिवज्ज्ञातावस्था सप्रति वराकस्य मे। ( प्रकाशम् ) स्वामिनि! क्व नु प्रेषितोऽहम्?

कृत्तिका—हता ते स्वामिनी! प्रथम तावत्कथय क्व गत इति।

भाद्रव्यः—नाहं क्वचिद्गतः स्वामिनि ! कुक्कुरस्तावत् सञ्चारितः, मार्जन-मर्दन-खादनानि च विहितानि । अपि च क्व गतः स्वामिनि ? केन च निवेदितं भवत्यै ?

कृत्तिका—निवेदितं मे कर्णपिशाचेन । किन्तु, कथयसि न वा कुत्र गत इति ?

भाद्रव्यः—नहि स्वामिनि ! कुतोऽहं गच्छेयम् ?

कृत्तिका—ननु ज्ञातं, हतक ! मा तावत्कथय । ननु दृश्यतां कथम् ईक्षतेऽयम् । 'आकृतिर्बकस्य, दृष्टिस्तु काकस्य' । तत्तिष्ठत, हतकाः । यदा सर्वान् युष्मान् गृहान्निष्कासयेयम्, तदैव सुखेन स्वप्याम् । कः खलु बहिर्भाषते ? न परिचित इव स्वरः । एतेषां बाह्यास्वादसहचरेण केनापि भाव्यम् । छद्मिनामीदृशानां सम्पर्कात् एव एते विकृतिमापन्नाः । तूष्णीं भव । शृणोमि तावत् किमुच्यत इति । (कर्णं ददाति ।)

भाद्रव्यः—स्वामिनि ! यदि जनोऽयं विश्वासपात्रम्—

कृत्तिका—अपि नाशक्तोसि 'तूष्णीं भव' इति ? किम् ? एष संलापो न मया श्रवगन्तव्यः, इति शिथिलयसि जिह्वामेवम् ? (पुनराकर्णयितुमारभते ।

भाद्रव्यः—ननु स्वामिनि ! कुतोऽहम्—

कृत्तिका—रे हतक ! ननु तूष्णीं भवसि वा न वा ? गच्छ, अपेहि इतः, अपसर । (भाद्रव्यो निष्क्रान्तः ।) (ततः प्रविशति रोहिणी ।) आगम्यतां नन्वागम्यताम् । कुत्र पुनरेतावन्तं कालं प्रचलिता ते धृष्टयात्रा ? अपि च, अपृष्ट्वैव मां कथं गता ? तत्कथय प्रथमम् ।

रोहिणी—स्वामिनि ! मा कोपं कुरु । ह्यः किल भवती वराकीं तां तीव्रतमैर्दुर्वचनैरक्षिणोत् । अहमपि अवाच्यवचनैस्ताडिता । हतायाः मम तावदास्तां कथा । किन्तु, गताहं तां सान्त्वयितुं तस्याः सकाशे ।

कृत्तिका—अवगतमिदानीम् । सुष्ठु अवगतं किमर्थं त्वं गतेति । सत्यं मर्कटीभूतम्, इति छिद्रं पूरयितुं गता त्वमिति स्पष्टम् । एवं त्वं तस्याः षष्ठिकायाः मुण्डनेन करिष्यसि । अहं तु श्रेष्ठिनीं मरणीं सर्वमेव पृच्छामि । अहं तावद्दिशिना 'कथं न मे प्रश्नस्योत्तरम् अद्यापि प्राप्तमिति । केन

पुन अ तराय समुत्पादित स्यात् ? इति। त्व तर्हि सा। अपि मम कार्ये इत्थ परिपन्थीभवसि ? तिष्ठ तावत्।

रोहिणी—*किन्तु शृणोतु तावत्स्वामिनी मे विवक्षितम्। अहं खलु स्वामिन्या* एव कार्यं साधयितु गता, इति ननु भणितव्यम्।

कृत्तिका—मम कार्यं साधयितुम् ?-अयि धृष्टे !

रोहिणी—शृणोतु स्वामिनी। य सशय स्वामिविषयको भव या मनसि उद्भूत, स खलु स य एव, इति मे प्र ययो जातः।

कृत्तिका—एवमेतत्। कथमिति कथय शीघ्रम्।

रोहिणी—कथितमेव मया यदह स्वातीं द्रष्टु गतेति। तया तु स्वामिनि ! अद्भुतमेव कथितम्।

कृत्तिका—किं नु तत् ? अत्र समीप तावदागच्छ। आम्, सम्प्रति कथय किं तदिति।

रोहिणी—पश्यतु स्वामिनी। (इतस्ततोऽवलोकयन्ती।) स्वामिन· सदेश मादाय माद्व्य अद्य प्रभाते तत्र गतः।

कृत्तिका—अपि तस्याः स देशमादाय गतो माद्व्य ? अहो भीषणता कपट प्रव घस्य। अरे माद् यहतक! अथ कीदृश पुन स देश ?

रोहिणी— अद्य सायम् अ धकारे जाते, त्व मम आम्रराज्या कोणे मिलितुमर्हि' इति भर्त्रा आमन्त्रिता स्वाती।

कृत्तिका—अपि 'जातेऽ धकारे आयाहि' इति निमन्त्रिता ? इदमेव तावत्कथयन्ती स्थिता। त्वया तु पण्डितम यया न त स्वीकृतम्।

रोहिणी—शृणोतु तावत्स्वामिनी। तत कथ सा निमन्त्रिता इति न अह पृष्टा अत्रभवत्या।

कृत्तिका—ननु कथय, कथय। कथ निमन्त्रिता ?

रोहिणी—निवदित तस्यै 'जात सध्याकाले, अज्ञात केनचित्, त्व—' (प्रविशति भृत्य।)

कृत्तिका—किं रे हतक! किमागतोऽसि, अनुज्ञा विना ? तदपेहि, अपसर।

भृत्य—स्वामिनि! आगतो बहि कश्चन महाशय। भणति च 'चित्रमेकमु द्दिश्य, स्वामिना ते सार्धं किंचिदस्मि वक्तुकाम' इति।

कृत्तिका—चित्रमुद्दिश्य किंचिदरित वक्तुकाम । अयि तदेव तत् । मयोक्तमेव तद् भाति । जनादस्मात्प्राप्येत किंचिद् गमकमधिकम् । (भृत्य प्रति ) गच्छ प्रवेशय तान् । (भृत्यः निष्क्रान्तः ।) एव तर्हि इतको भाद्व्यस्ता गतः ? पतिदेवैश्चास्माक 'दर्शनार्थे सायमायाहि' इति निमन्त्रिता स्वाती ? किंचान्यत् तस्यै कथितमिति भणसि ?

रोहिणी—भीतभीता खलु वर्तते स्वाती ! ननु पुरुषा एव ते । अनिरूपणीयं नाम तेषा वर्तनम् ! तत्रापि सायकाले, एकाकिनी, आम्रराजौ, सापि सावगुण्ठना निमन्त्रिता । अन्यच्च—

कृत्तिका—सावगुण्ठना तावच्च कश्चन द्रष्टु शक्नुयादिति हेतोः । अथ किमर्थमाहूता, इति किं शिशुरपि न कथयेत् ? आगतस्त्वेष जनः ! सकृद् भाति 'नाथ द्रष्टव्यः' इति । अदृष्ट्वा तु नास्त्युपाय. । रोहिणि ! त्वं तावत्तस्मिन्कक्षे तिष्ठ । गते चास्मिन्पुनरागत्य निवेदय सर्वम् । (निष्क्रान्ता रोहिणी ।) 'सायकाले सावगुण्ठना'-मार्जारो ननु निमीलितनेत्र पयः पिबति, चिन्तयति च 'को मा पश्येत् ?' इति । (प्रविशति आश्विनश्रेष्ठी ।) आगम्यताम्, आसनमिदमलंक्रियताम् ।

आश्विनश्रेष्ठी—कंचन विषयमुद्दिश्य फाल्गुनरायमहोदयान् द्रष्टुकामोऽहम् । कदा नु तान्प्रेक्षिष्ये ?

कृत्तिका—अपि चित्रमुद्दिश्य ?

आश्विनश्रेष्ठी—अथ किम् । मया चित्रमात्मनः एकस्यै, एव तावन्मन्यताम्, अथ वा, किं मन्यताम् ? प्रसङ्गवशात्स्पष्टमेव कथयामि, कस्याश्चित् वेशवनिताया· कन्यायै. दत्तम् । न खलु तादृङ्महत्त्व तस्य चित्रस्य । रहस्यविशेषस्य तु कस्यचिदाकलनार्थम्, आवश्यक तन्मम । यतो जन्मनो मे सुखदु.खे तस्य रहस्यस्याधीने ।

कृत्तिका—तत्कथम् इति अवगत मया । ननु पृच्छामि, अपि सा कन्या शते क्षीणा दर्शनीया ?

आश्विनश्रेष्ठी—कुत शते ? 'सहस्रेषु' इति वक्तव्यम् । तत्तावदास्ताम् । मम मनसि संशयोऽयं समुत्पन्न·, यत्तन्मे चित्र तया अन्यस्मै प्रदत्तमिति ।

कृत्तिका—सयुक्तिकमेवाह भवान्। ममाप्यनुमानं मुष्ठु संवदत्यनेन। आसीन्ममापि मनसि इयं शङ्का।

आश्विनश्रेष्ठी—का नु सा ? तया तच्चित्रं फाल्गुनरायेभ्यः अर्पितम् इति ?

कृत्तिका—आम्, एवंरूपैव।

आश्विनश्रेष्ठी—'फाल्गुनरायेभ्यः प्रत्तम्' इति ? हन्त ! निरस्तस्तर्हि संशयः। किमतोऽप्यधिकमिष्यते प्रमाणतया ?

कृत्तिका—(पटान्तेन नेत्रे परामृशन्ती) मम तावज्जीवनमेव धूलिसात्कृतम्।

आश्विनश्रेष्ठी—वराकी रोदितुं प्रवृत्ता। हा हन्त ! अतस्तावत् सुस्पष्टमेव सर्वं जातम्।

कृत्तिका—अथ, किं नामधेयं तस्याः कन्यायाः।

आश्विनश्रेष्ठी—'रेवती' ति।

कृत्तिका—ननु 'रेवती ?' (स्वगतम्) नाम तावदवगतं पत्रिकायाः।

आश्विनश्रेष्ठी—अप्यायाता सा अत्रभवत्या दृष्टिपथं कदाचित् ?

कृत्तिका—सा ! मद्दृष्टिपथम् ! न जाने किमिदानीं कथयेयम्। न खलु वृत्तानि ईदृशानि पुरुषेभ्यो निवेदनीयानि स्त्रीभिः। अन्यथा, किं मया दृष्टं, किं न वा, इति सर्वमपि भवते न्यवेदयिष्यम्।

आश्विनश्रेष्ठीन्—ननु भणामि, अपि विपरीतं किंचिच्चेष्टितम् अवलोकितं भवत्या ?

कृत्तिका—भोः ! यदि अष्टादशवर्षदेशीया यौवनमदभरा तरुणी, परपुरुषस्य शरीरेऽनिर्बन्धं लुठेद्यथाकामम्, अनुचिता एव सा चेष्टा इति भणिष्यति भवान्, न वा ?

आश्विनश्रेष्ठी—अपि फाल्गुनराय-शरीरे लोठितुमारभत ?

कृत्तिका—आम्, तेनापि च शरीरे, अङ्के, तेषां स्कन्धे करं निधाय, अङ्गेन-ननु लग्नेऽहं वर्णयन्ती। सर्वं चैतद् दिवा, भवति सर्वत्र सूर्यप्रकाशे, मामस्पृष्टस्येव पुरस्तात्-तस्य वृक्षस्याधस्तात्।

आश्विनश्रेष्ठी—अहो निर्लज्जता तस्याः।

कृत्तिका—अपि च, ननु कथयामि, सा तैरेवं समाश्लिष्टा—



कृत्तिका—भवान्नाम साक्षात् रामचन्द्रस्य अवतार ।

( पृष्ठम् २२ )

आश्विनश्रेष्ठी—रेवति! न मया स्वप्नेऽपि चिन्तितमासीत् यत्त्वमेवम्-सत्यशीला जायेथा इति। किन्तु, अचिरेणैव आत्मनो यथार्थरूप प्रकटीकृत तावत्त्वया। अस्तु। आर्ये कृत्तिके! अत्रभवत्या साहाय्येन सर्वं विवरण मया लब्धमिति बलवदनुगृहीतम् आत्मान मन्ये भवत्या। अन्ते तावत्पृच्छामि सकृत्—अपि सत्यमेतत् सकलम्?

कृत्तिका—'अपि सत्यम्' इति? भो! ननु भणामि, एताभ्या नेत्राभ्या स्वयमवलोकित मया। तत्किमनेन प्रश्नेन? नून प्रत्यक्षीकृतमेतन्मया। अपि च पतिदेवानामस्माक, पर्याप्तो मे अनुभव। नहि इष्ट किमपि चेष्टमानाना मनागपि दोलायते तेषा मनः। अथ भवतो रेवतीमुद्दिश्य भवतैव निर्णयः कार्यः।

आश्विनश्रेष्ठी—इदानीमवश्यकर्तव्यतामेव गतोऽस्ति मे सः। अथ, अस्ति तच्चित्र फाल्गुनरायसनिधौ?

कृत्तिका—आम्, विद्यते। क्षणमात्रमेव हस्ते धृत मया। तदानीं प्रक्षुब्धराक्षसवन्मामवरुन्ध्य आच्छिन्नवन्तस्तन्मत्करत। आसीदेव सशयो मनसि मे प्रादुर्भूतः। अत, अरुन्तुद किंचिदुक्तवती। किन्तु पुरुषा एव ते। मामेव प्रत्यास्कन्नवन्तः। (पटान्तेन नेत्रे परामृश्य) भणितवन्तश्च माम् 'एतत् कस्यापि ते जनस्य चित्र गृहीत्वासि उपविष्टा' इति। अहो असत्यता तस्य तेषा वचनस्य।

आश्विनश्रेष्ठी—अलम्, अल रुदितेन। इदानीमहमस्मि भवत्याः साक्षी। अपास्यतु सकल भय भवती। अपि, आपृच्छे भवतीम्, इदानीम्?

कृत्तिका—आम्, अथ तत्सम्बद्धमन्यत्किंचिद्यदि भवेद् भवतो गोचरम्, निवेदयतु मे तावद् भवान्।

आश्विनश्रेष्ठी—तत्र सर्वथा वीतचिन्ता भवती भवतु। साधयामि। (निष्क्रान्तः।)

कृत्तिका—अहो सम्भावितता मनःप्रसादश्च वराकस्य! क्वाय महाभागः? क्व च अस्माकम् पते? पृच्छामि तावत्, ते एते पतय, ये एव नः

आश्विनश्रेष्ठी—रेवति । न मया स्वप्नेऽपि चिन्तितमासीत् यत्त्वमेवमसत्यशीला जायेथा इति । किन्तु, अचिरेणैव आत्मनो यथार्थरूपं प्रकटीकृतं तावत्त्वया । अस्तु । आर्ये कृत्तिके ! अत्रभवत्याः साहेन सर्वं विवरणं मया लब्धमिति बलवदनुगृहीतम् आत्मानं मन्ये भवत्याः । अन्ते तावत्पृच्छामि सकृत्—अपि सत्यमेतत् सकलम् ?

कृत्तिका—'अपि सत्यम्' इति ! भोः । ननु भणामि, एताभ्यां नेत्राभ्यां स्वयमवलोकितं मया । तत्किमनेन प्रश्नेन ? नूनं प्रत्यक्षीकृतमेतन्मया । अपि च पतिदेवानामस्माकं, पर्याप्तो मे अनुभवः । नहि इष्ट किमपि चेष्टमानानां मनागपि दोलायते तेषां मनः' । अथ भवतो रेवतीमुद्दिश्य भवतैव निर्णयः कार्यः ।

आश्विनश्रेष्ठी—इदानीमवश्यकर्तव्यतामेव गतोऽस्ति मे सः । अथ, अस्ति तच्चित्र फाल्गुनरायसंनिधौ ?

कृत्तिका—आम्, विद्यते । क्षणमात्रमेव हस्ते धृतं मया । तदानीं मनुष्यराधसबन्मामवस्कन्द्य आच्छिन्नवन्तस्तन्मत्करतः । आसीदेव संशयो मनसि मे प्रादुर्भूतः । अतः, अरुन्तुद किंचिदुक्तवती । किन्तु पुरुषा एव ते । मामेव प्रत्यारकन्नवन्तः । (पटान्तेन नेत्रे परामृश्य) भणितवन्तश्च माम् 'एतत् कस्यापि ते जनस्य चित्रं गृहीत्वासि उपविष्टा' इति । अहो असत्यता तस्य तेषां वचनस्य ।

आश्विनश्रेष्ठी—अलम्, अलं रुदितेन । इदानीमहमस्मि भवत्याः साक्षी । अपास्यतु सकलं भयं भवती । अपि, आपृच्छे भवतीम्, इदानीम् ?

कृत्तिका—आम्, अथ तत्सम्बद्धमन्यत्किंचिद्यदि भवेद् भवतो गोचरम्, निवेदयतु मे तावद् भवान् ।

आश्विनश्रेष्ठी—तत्र सर्वथा वीतचिन्ता भवती भवतु । साधयामि । (निष्क्रान्तः ।)

कृत्तिका—अहो सम्भावितता मनःप्रसादश्च वराकस्य । क्वायं महाभागः ? क्व च अस्माकम् एते ? पृच्छामि तावत्, ते एते पतय, ये एव नः

प्रपीडयन्ति, किं न सकृद् नः अग्निसात्कुर्वन्ति ? तथाकृते मोचितैव स्यां शश्वत्। आम्, अस्ति तु वृत्तशेषो रोहिण्याः श्रोतव्यः। तत् तामेव गच्छामि। ( निष्क्रान्ता। )

## द्वितीयः प्रवेशः।

( फाल्गुनराम-निवासस्य समीपे। )

फाल्गुनरायः—एवं तेनात्मनो नाम 'आश्विनश्रेष्ठी' ति कथितम्, तत्सत्यमेव। किमतः परम् ? इदानीं वाक्परिचयो जातः, निवासस्थानमवगतम्, नामापि ज्ञातम्। तत्किमवशिष्टम् ? न किञ्चन। अधुना केवलं गृहं प्रविश्य, अर्धचन्द्र दत्वा निष्कासयितव्या सा गृहात्। अथ को नु खल्वयम् ? अयमेवासौ आश्विनश्रेष्ठी। कथं मद्गृहान्निष्क्रामति ? अयं माद्व्यश्च तेन सार्धम्। ( ततः प्रविशति आश्विनश्रेष्ठी माद्व्यश्च। ) ( स्वगतम् ) अरे ! माद्व्योऽयम्। तस्मात् उत्कोचं गृह्णाति। ( प्रकाशम् ) किं रे माद्व्य ! किमेतद् गृहीतम् ?

माद्व्यः—न किंचन। भर्तः ! न किंचन। एतैर्भणितं 'रूप्यकं गृहाण' इति। भर्तः ! कुतोऽहं रूप्यकं तेषां गृह्णीयाम् ? मत्सर्पयितुमना एव अभवम्। अत्रान्तरे भवन्तः प्राप्ताः। ( रूप्यकं क्षिप्त्वा निष्क्रान्तः। )

फाल्गुनरायः—अरे चोर ! ( आश्विनश्रेष्ठिनं प्रति ) कुतः खलु भवन्तो मम गृहे ?

आश्विनश्रेष्ठी—भवन्तमेव द्रष्टुमागतोऽहम्।

फाल्गुनरायः—कुतः ?

आश्विनश्रेष्ठी—मम चित्रमेकं भवत्सकाशे वर्तते नु ?

फाल्गुनरायः—आम्, वर्तते। ननु मन्ये, वृत्तमेतत् त्वया निवेदितं स्याद् भवतः।

आश्विनश्रेष्ठी—बाढम्, तथा एव कथितम्।

फाल्गुनरायः—अथ, किमन्यत्कथितम् ।

आश्विनश्रेष्ठी—विपुलानि कथितानि रहस्यान्तराणि ।

फाल्गुनरायः—ध्रुवं तत्र विषये नासीत्कश्चन संदेहो मे । तिष्ठत्वेतत् । किं पुनरिदानीं मिथः सङ्कल्पितमतः परम् ?

आश्विनश्रेष्ठी—अत्र किं सङ्कल्पयितव्यम् ? ननु दृश्यताम् । क्षुद्रं चित्रमधिकृत्य नाहं कलहं करोमि भवता । यतः खलु तया स्वेच्छया तद् भवते समर्पितम्—

फाल्गुनरायः—न हि, न हि । प्रमाद्यते भवताऽत्र । न तया समर्पितम्, मया तस्या आच्छिन्नम् ।

आश्विनश्रेष्ठी—तया वा दत्तं भवेत्, भवता वाऽऽच्छिन्नं स्यात्, अस्मिन्क्षणे तच्चित्रं भवतः सकाशे भवति, इति निश्चितमेतत् । न वा ?

फाल्गुनरायः—आम्, भवति ।

आश्विनश्रेष्ठी—तेन हि जातो निर्णयः । अथ यद्वा तद्वा करोतु तेन चित्रेण भवान् । मम तावदेतावदेव कथनीयम्, यत्सर्वथा उत्सादितोऽस्मि भवता ।

फाल्गुनरायः—कथमिव ? भवतोर्निर्भरविलासे अन्तरायोऽस्म्यहं संवृत्तः, इति हेतो ?

आश्विनश्रेष्ठी—आम्, अथ किम् ।

फाल्गुनरायः—तद् भवतां मतेन, अहं नाम दुष्टो घातकश्च जनः स्याम् नु ? वराकयोः सुखे प्रत्यवायं निर्मिमाणः, अतिनिष्ठुरो राक्षसः खल्वहम् ।

आश्विनश्रेष्ठी—यथेष्टं वदतु भवान् । किन्तु, या खलु मुहूर्तात् प्रागेव केवलं जीवितं मे संवृत्ता, तस्या मम च विघटनं, शश्वद्विघटनं, कारितं भवता ।

फाल्गुनरायः—'या केवलं जीवनं मे संवृत्ता !' नूनं भोः स्पष्टमेव भाषते भवान् । किन्तु, सुहृद्वराः ! यदा सा भवता जीवितं, 'हृदयं द्वितीयम्' आसीत्संवृत्ता, तत्क्षणमेव व्याकुलीभूतमासीन्मम जीवितम्, इति, उचिता करुणायाः लवोऽपि मवन्मनसि ?

आश्विनश्रेष्ठी—यद् वृत्त तद् वृत्तम्। अत पर तु कथयामि शपथपूर्वकम्, न मम तया दूरेणापि सम्बन्ध । सा भवत । भवांश्च तस्याः। यथाकाम कुरुता स्वैराचरण भवन्तौ।

फाल्गुनराय—अहो सुमहच्चावदौदार्य प्रकटीकृत भवता। किन्तु, सप्रति न मे कोऽप्यर्थस्तेन। यथा भवता मे कथित तथैव अहमपि भवते कथयामि 'अत पर न मम तया कोऽपि सम्बन्ध । सेय भवत, भवांश्च तस्या । भवन्तावव यथाकाम स्वैराचरण कुरुताम्'।

आश्विनश्रेष्ठी—न हि न हि। अत पर अलनाम तया केनापि व्यवहारेण। य सवृत्त स एव पर्याप्त ।

फाल्गुनराय—कुतोऽचिरादेव भवान् एवम् उद्वेजितस्तस्या ?

आश्विनश्रेष्ठी—यावती, मे प्रियाभवत्प्राक्, तावत्येव अप्रियास्ति मे साम्प्रत सा सवृत्ता। विश्वासघातिनी !

फाल्गुनराय—विश्वासघातिनी! (स्वगतम्) सत्यमेव विश्वासघातिनी। अहो विडम्बना न्यायस्य! ननु, स्वामिन प्राक् चोर एव उच्चैराक्रन्दति! (प्रकाशम्) किं भवता कलहेन? तामुद्दिश्य यन्मया कर्तव्य, विदधामि तदहम्, यद्भवते रोचते विदधातु तद् भवान्। (निष्क्रान्त ।)

आश्विनश्रेष्ठी—अथ किमन्यन्मयापि कार्यम्? सकलमेतत्कैतव तया स्वीकारयिष्यामि ततश्च-कुतो मे भय ईश्वरादपि तस्या ?—वर मे प्राणैरपि वियोग न पुनरत पर नामोच्चारोऽपि तस्या कदाचन। (निष्क्रान्तः।)

---

## तृतीयः प्रवेशः।

(तत प्रविशति चित्रमन्वेषयन्ती रेवती।)

रेवती—ननु भणामि केय खलु भूतचेष्टा सवृत्ता? अस्यैव वृक्षस्य अधस्तात् तच्चित्र मे दत्तमिव। आम्, अयमेव असौ वृक्ष । तच्चित्रमवलोक्य अञ्चलावृत कृत्वा च गताहम्, इत एव कार्तिकनाथम्। प्रदक्षिणीकृत्य च त, बहिर्मुहूर्त तुलसीवेदिकायामुपाविशम्। न खलु तत्र निपतित चित्रम्?

मतः, ततः प्रस्थितायां देवालयान्निर्गतायां च मयि, तदनाहृतमिव अभवत्। स्पष्टं च स्मर्यते मया, यत्तत्सम्यगाहृतं पुनरपि। ततस्ततः— आम्, नन्वेतदेव। तस्मिन्नेव समये मूर्च्छिताहं पतिता। तदानीं कदाचित् भूमौ पतितं स्यात्। तदनु समाश्वस्ता चाहं गृहं प्रस्थिता। तदानीं मनो मे संभ्रान्तमिवासीत्। मन्ये, ततो नासीत्किंचिदपि तदवधानं मे। अपि न तेषां हस्तगतं स्यात्, यैरहं गृहं प्रापिता। किन्तु, यदि एवमभविष्यत्, अवश्यं तर्हि ते मदीयं चिह्नं मां प्रापयिष्यन्। तत् किं नु खलु विषयस्य? उक्तवन्तः पुनराश्विनश्रेष्ठिनः 'तन्मया कस्यचिज्जनस्य हस्ते दृष्टम्' इति। को नु खल्वसौ स्यात्? यः संशयस्तेषां मनसि समुद्भूतः, यथार्थ एवासौ तेषां मत्या। तत्किमिदानीं मया विधेयम्? गतास्ते मयि कुपिताः, इति दास्यदुःखं दहति मामिदम्।

गीतम्। ('श्याम घुघट पट खोलो' इतिवत्)

संतापमसं किं स्वान्तम्। अमेयम्। कारणमथ किं जातम्
॥ध्रु०॥ कृपारोपणं छिन्नमधुना। कस्मादपि पुरुषाय ॥ १ ॥
याताः कुपिता, इति परितापः। प्रदहति मनो नितान्तम् ॥२॥

(विलोक्य) अम्मो! इमे आश्विनश्रेष्ठिन एव इत आयान्ति। वदने येषाम्, अन्यत् कोऽपरः भावः, उत संशयः? नूनं संभ्रान्तमिव भाति चित्तमेषां, निर्दैरेतैः। (आगत्य आश्विनश्रेष्ठिनं प्रति) दृष्टिर्वः भाषति, मां प्रति। किं तथा, यदत्र अन्यत्र प्रवर्तितया?

आश्विनश्रेष्ठी—(अरे) आम्, दृष्टिर्भाषति ननु! यदि भावेनैव, स्वयमेव ध्रुवं ज्ञेयं तत्।

रेवती—यदि मया भूषेण इति कुत्सैव कारितं, का तर्हि हानिः प्रभवति तेन? इदं पुनः सखे विदन् प्रभुरिव मनागपि। अन्यथा अत्र कथं मामाननमेव तत्र लघीकुर्यात्।

आश्विनश्रेष्ठी—मारभ्यत् अनया मायाजालमुत्थापनम्! किन्तु, नायं कश्चन मन्दः प्रभुः। इत-स्तिरी या ईदृशानि वाक्यानि उद्गृह्य, पुरुषप्रवञ्चनः प्रभवतः स्ववदन्।

रेवती—यदि तत्पुरुषः, किमर्थं इत, अथैव परितिष्ठति वा इतः!

आश्विनश्रेष्ठी—यद् वृत्तं, तद् वृत्तम्। अतः परं तु, कथयामि शपथपूर्वकम्, न मम तया दूरेणापि सम्बन्धः। सा भवतः। भवांश्च तस्याः। यथाकामं कुरुतां स्वैराचरणं भवन्तौ।

फाल्गुनरायः—अहो सुमहत्तावदौदार्यं प्रकटीकृतं भवता। किन्तु, संप्रति न मे कोऽप्यर्थस्तेन। यथा भवता मे कथितं, तथैव अहमपि भवते कथयामि 'अतः परं न मम तया कोऽपि सम्बन्धः। सेयं भवतः, भवांश्च तस्याः। भवन्तावेव यथाकामं स्वैराचरणं कुरुताम्'।

आश्विनश्रेष्ठी—न हि न हि। अतः परं अलं नाम तया केनापि व्यवहारेण। यः संवृत्तः स एव पर्याप्तः।

फाल्गुनरायः—कुतोऽचिरादेव भवान् एवम् उद्वेजितस्तस्याः?

आश्विनश्रेष्ठी—यावती, मे प्रियाभवत्प्राक्, तावत्येव अप्रियास्ति मे सांप्रतं सा संवृत्ता। विश्वासघातिनी!

फाल्गुनरायः—विश्वासघातिनी! (स्वगतम्) सत्यमेव विश्वासघातिनी। अहो विडम्बना न्यायस्य! ननु, स्वामिनः प्राक् चोर एव उच्चैराक्रन्दति! (प्रकाशम्) किं भवता कलहेन? तामुद्दिश्य यन्मया कर्तव्यं, विदधामि तदहम्, यद्भवते रोचते विदधातु तद् भवान्। (निष्क्रान्तः।)

आश्विनश्रेष्ठी—अथ किमन्यन्मयापि कार्यम्? सकलमेतत्कैतवं तया स्वीकारयिष्यामि ततश्च-कुतो मे भयं ईश्वरादपि तस्याः!—वरं मे प्राणैरपि वियोगः, न पुनरतः परं नामोच्चारोऽपि तस्याः कदाचन। (निष्क्रान्तः।)

---

## तृतीयः प्रवेशः।

*(ततः प्रविशति चित्रमन्वेषयन्ती रेवती।)*

रेवती—ननु भणामि केयं खलु भूतचेष्टा संवृत्ता? अस्यैव वृक्षस्य अधस्तात् तेनैतच्चित्रं मे दत्तमिव। आम्, अयमेव असौ वृक्षः। तच्चित्रमवलोक्य अञ्चलावृतं कृत्वा च गताहम्, इत एव कार्तिकनाथम्। प्रदक्षिणीकृत्य च तं, बहिर्मुहूर्तं तुलसीवेदिकायामुपाविशम्। न खलु तत्र निपतितं चित्रम्?

यतः, ततः प्रस्थिताया देवालयान्निर्गतायां च मयि, तदनावृतमिव अभवत्। स्पष्टं न स्मर्यते मया, यत्तत्सम्यगावृत पुनरपि। ततस्ततः— आम्, नन्वेतदेव। तस्मिन्नेव समये मूर्च्छिताहं पतिता। तदानीं कदाचित् भूमौ पतितं स्यात्। तदनु समाश्वस्ता चाहं गृहं प्रस्थिता। तदानीं मनो मे सभ्रान्तमिवासीत्। मन्ये, ततो नासीत्किंचिदपि तदवधानं मे। अपि न तेषां हस्तगतं स्यात्, यैरहं गृहं प्रापिता। किन्तु, यदि एवमभविष्यत्, अवश्यं तर्हि ते मदीयं चित्रं मां प्रापयिष्यन्। तत् किं नु वृत्तं चित्रस्य? उक्तवन्तः पुनराश्विनश्रेष्ठिनः 'तन्मया कस्यचिज्जनस्य हस्ते दृष्टम्' इति। को नु खल्वसौ स्यात्? यः संशयस्तेषां मनसि समुद्भूतः, यथार्थ एवासौ तेषां मत्या। तत्किमिदानीं मया विधेयम्? गतास्ते मह्यं कुपिताः, इति शल्यहतकं दहति मामिदम्।

**गीतम्।** ('श्याम घुंघट पट खोलो' इतिवत्)

**संशयमग्नं किं स्वान्तम्। अमेयम्। कारणमथ किं जातम्॥ध्रु०॥ वृथारोपणं चित्रमयन्ज्ञम्। कस्मायपि पुरुषाय॥१॥ याताः कुपिताः, इति परितापः। प्रदहति मनो नितान्तम्॥२॥**

(विलोक्य) अम्मो! इमे आश्विनश्रेष्ठिन एव इत आयान्ति। वदने चैषाम्, अप्यमं कोपस्य भावः, उत संशयस्य? नूनं सभ्रान्तमिव भाति चित्तमेतया, चिह्नैरेतैः। (आगतम् आश्विनश्रेष्ठिनं प्रति) दृष्टिर्वराकी धावति, मां प्रति। किं तया, प्रसह्य अन्यत्र प्रवर्तितया?

**आश्विनश्रेष्ठी**—(जपन्) आम्, दृष्टिर्धावति ननु! यदि धावेत्स्वैरं, स्वयमेव ध्रुवं छेत्स्ये ताम्।

**रेवती**—यदि मया श्रूयेत इति बुद्ध्यैव जल्पेत, का तर्हि हानिः प्रकटमपि तेन? इदं पुनः वृक्षे स्थितं शुकमुद्दिश्य भणाम्यहम्। अन्यथा अत्र कश्चन आत्मानमेव तस्य लक्ष्यीकुर्यात्।

**आश्विनश्रेष्ठी**—आरब्धम् अनया मायाजालप्रसरणम्। किन्तु, नाय कश्चन प्राकृतः शुकः। दश-विंशतिं वा ईदृशानि जालकानि उद्धृत्य, उड्डयमानः शुकवरः खल्वयम्।

**रेवती**—यदि तावच्छुकवरः, किमर्थं तदा, अत्रैव परिपतति तत इतः?

आश्विनश्रेष्ठी—न खलु कुतश्चिद् भीतिः । राजमार्गोऽयम् । यः कश्चन यत्र कुत्रापि अस्मिन्, यावत्कालमिच्छेत् तावत्कालं तिष्ठेत्, अपगच्छेद्वा स्वैरम् । सर्वःखलु प्रभुरात्मनो भवति ।

रेवती—(उपसृत्य) तस्मिन्दिने अतीव स्पष्टार्थं कवनं गीतं तेन विरागिणा । तदहं स्वगतं गायाम्युच्चैः । न कश्चन शृणुयात् । किं नु तत् ? आम् ।

गीतम् । ('जल जयो ऐसो' इतिवत्)

हृदि हि धर त्वं योधं सत्यम् । संसारे शान्तिनिर्झरम् ॥ध्रु०॥
संशयशठः पिशाचो महान् । स्वीकुरु तं न च क्षणमात्रम् ॥१॥
निशाचरी कल्पना जडा । प्रसेत्कण्ठमिति महद्भयम् ॥२॥
यद्रूपा सा जनवाणी । यदि स्वीकृता, घातो भविता ॥३॥

अप्यवगत कवनस्यार्थः ?

आश्विनश्रेष्ठीः—आम् अथ किम् । अवगतः अस्यार्थः, सम्यगाकलित-स्तवाप्यर्थः ।

रेवती—किं, मदर्थहतकस्याकलनार्थम्, एतावान् मयासः आवश्यको जातः ? अपि इदानीं संवृत्ता सम्यक्प्रतीतिर्नु ?

आश्विनश्रेष्ठी—संवृत्ता, संवृत्तेदानीं सम्यक्प्रतीतिः । त्वं तावत्कमनीया, सुवर्णावगुण्ठिता, हीनचाप्लुका, चलनवचनशीला च पुत्तलिकासि ।

रेवती—संशयविषस्य प्रभाव एतेषां नाद्यापि क्षीणः । तत्किंनु विधेयम् ? (प्रकाशम्) अयं तावत्परिहास-भेद-हतको न मे रोचते । स्यात्कपोल-परिमितं, किन्तु सकृन्मन्दमधुरं स्मितं कृत्वा, आगम्यतां मद्गेहं यावत् । तत्र स्वयमहं मिष्टं ताम्बूलं कृत्वा समर्पयिष्ये भवते । तत् सेवित्वा, यदीदं, सदा पुनरपि प्रकुप्य मे, प्रतिनिवर्ततां भवान् । किम् ? अपि जातं सफलं मनोऽनुकूलम् ? आर्त नु ? ननु दर्शयेतां, अथवा निरुद्धावपि कपोलौ भवतः, हसितुमारब्धौ ।

आश्विनश्रेष्ठी—अतः परमपि तव गेहम्, त्वयार्पितं ताम्बूलं च ? विस्मर्यतां, विस्मर्यतां सम्प्रति सर्वमेतत् ।

रेवती—ननु मुहु विचार्यतां वचनमिदमात्मनः । ईदृशः रसस्वसरः न, पुनः

प्रापणीय । किं बहुना 'शपथमहं करोमि' 'इदं वचनं क्रियते' प्रमादो मे जातः' 'क्षम्यतामयं जनः' इति असकृत्प्रार्थयत भवत वचः, नैवाकर्णयिष्ये। अतो भणामि 'सुष्ठु विमृश्यताम्, आगम्यतां च मद्गेहं यावत्' इति।

आश्विनश्रेष्ठी—अपागातः समयः, चिराय अनुनयस्य क्षमायाचनस्य च। अत परम्, अलं स्वप्नेऽपि तादृशं किंचन कल्पयित्वा। न अहम् ननु भणामि, न अहम् इयान् अयम् अस्मि।

रेवती—सत्यं न्विदम्? न तु मे प्रत्ययः। (हसति।)

आश्विनश्रेष्ठी—हस। यथेष्टं हस। एतावतो दिवसान् मुग्धमिमं जनमुपलभ्य पञ्जरे तं बध्दुं बद्धपरिकरा त्वम्। किन्तु—

गीतम् ('कर नुले जाये' इतिवत्)

कुटिलहेतुस्तव विहतः। गृह्णाम्येन निजपादोऽपियति ॥ ध्रु० ॥
महाघोरमरणाद्विमुक्तः! उरसि विपत्को नेत्रमल्लश्स्तीनः सक्तः ॥ २ ॥

रेवती—ननु शोभनमिदं सवृत्तम्। नूनं भाग्यवन्तो भवन्तः, यच्छीघ्रमेव सकलं ज्ञात्वा विमुक्ताः। सम्प्रति, अभिमतं यत्र, गम्यतां हि तत्र।

आश्विनश्रेष्ठी—गच्छाम्यहं यथाभिमतं, त्वमपि साधय यथेष्टं, येषां केषांचित्

रेवती—भो महाशय! मर्यादातिपातो नूनमेव प्रवृत्तः।

आश्विनश्रेष्ठी—कुतः प्रत्यवाय? किमद्यापि मर्यादापरिपालनेन? अपि च, त्वादृश्या दुर्वृत्ताया विषये, का नाम मर्यादा?

रेवती—किमहं दुर्वृत्ता?

आश्विनश्रेष्ठी—आम्, आम्, दुर्वृत्तैव त्वम्। सकलं ते मायाजालं यथावदाकलितं मया। किन्तु, किं तत्कथनेन? रेवति! यत्तत्य 'प्राणेभ्योऽपि प्रियतरा, त्वं म आसीः पुरा ध्रुवम्। जातार्थोद्वेगहेतुस्तु, न शब्दैर्वर्ण्यते यथा ॥" न खलु, न दूये। तथापि कथयामि, नातः परं कदापि मद्दर्शनं ते भविष्यति।

रेवती—कुतो न भविष्यति ? किं च एतावज्जुगुप्सास्पदं कृतं मया ?

आश्विनश्रेष्ठी—किं कृतम् ? आदौ तावन्मह्यं चित्रं कस्मैचिच्छठाय अर्पितं त्वया ।

रेवती—(स्वगतम्) सर्वथा खल्वसत्योऽयमारोपः । तद् सम्प्रति एवमेव दण्डनीया एते । नात्र उपायान्तरम् ।

आश्विनश्रेष्ठी—किम् ? कुतो न प्रतिवदसि ? अर्पितं चित्रं न वा ?

रेवती—आम्, दत्तम् । तत्र किं वक्तुकामा भवन्तः ?

आश्विनश्रेष्ठी—किमिति दत्तम् ?

रेवती—केयं पृच्छा ? दातुमिष्टं, ततो दत्तम् ।

आश्विनश्रेष्ठी—यदि दत्तम्, दत्तम् । न मे विषादः कथमपि तन्निमित्तकः ।

रेवती—कुतस्तर्हि दीर्घनिःश्वसितान्येतानि ?

आश्विनश्रेष्ठी—ममापि नाम दीर्घनिःश्वसितानि ? ननु भणामि न कङ्कणाङ्कितौ मे करौ ।

रेवती—कामं न दृश्येते कङ्कणाङ्कितौ । तथापि, सावधानेन भाव्यम् । अन्यथा, वीरश्रिय. पूरोऽयमपसरेत् । देहली च मद्गेहस्य वराकी अत्यर्थं पीड्येत भवतो गमनागमनैः । न तदानीं पदक्षेपणमपि मद्गेहेऽहमनुशास्यामि । इति सावधानैः स्यातव्यम् ।

आश्विनश्रेष्ठी—एवं, भवती अपि सावधानैव भवितुमर्हति । अन्यथा, यथा प्रागेकवारम्, तथा पुनरपि, राजमार्गे एव, गले तस्य, क्षेप्स्यसि आत्मानम् ।

रेवती—'तस्य' इति नाम कस्य ? कदा ? क्व वा ? (स्वगतम्) इदं नवमेव प्रस्तुतमेतैः ।

आश्विनश्रेष्ठी—'क्व ?'—इति, तत्र वृक्षस्याधः । ह्यः प्रभाते । स भणति स्म 'गृहम् आयाहि' इति । अपि अवगतं, नवा, अधुनापि ?

रेवती—(स्वगतम्) अवगतम् । यदा मूर्च्छिताहं पतिता तदानींतन स्यादिदम् । किन्तु नैतैः सार्धं सत्यवचनमुचितम् । मुहूर्तं, यथापूर्वं कुटिलभाषितमेव युक्तम् ।

आश्विनश्रेष्ठी—अपि प्रतीतं न वा ?

रेवती—आम्, प्रतीतं, किं ततः ?

आश्विनश्रेष्ठी—मा पुनरपि तथैव पत ।

रेवती—तत्कुतः ? ननु केनास्मि नियन्त्रिता ? सर्वथा प्रभवाम्यहमात्मनः ।

आश्विनश्रेष्ठी—तर्हि, प्रथममेव एवं कथनं समीचीनमभविष्यत् ।

रेवती—यद्येवं प्रथममेव कथयितुं प्रवृत्ता वयम्, उद्ध्वस्त एव स्यादस्माकम् आपणः सर्वोऽपि ।

आश्विनश्रेष्ठी—यद्येवं

गीतम् । ( नगरी मोरी )

ननु सशपथमर्पितः करः । व्यर्थमेव वा ?
O निजतनुमददा मे तत्ते क्रीडितं नवम् ?
वितता माया, विलथैव सा किम् ?
मामनृणोः किं विधाय साक्षिणं माधवम् ?

रेवती—एवं शपथवचनानि तानि सत्यान्यवगतानि भवता ?

गीतम् । ( हे श्रवण )

मुग्धधियो मदनवशा धनिक-वणिज-बालाः ।
संयन्तुं तान् सकलान्सन्ति विविधपाशाः ॥ ध्रु० ॥
किं नु शपथवचनशतं सत्यमिति मतं वो ।
हसति च प्रवदति च जनः 'शम्भुरेष मूढः' ॥ १ ॥

आश्विनश्रेष्ठी—अलम्, अलमेतावतैव । इदमेव ते पश्चिमं मम दर्शनम् । साधयामीदानीम्—

रेवती—ननु गम्यतां निरामयम् । मा पुनरेवं विप्रलब्धा भवन्तु भवन्तः ।

आश्विनश्रेष्ठी—( मत्यावृत्य ) ' पुनरागमिष्यत्ययम् ' इति स्याच्चेत् तव मतिः, तां तर्हि विस्मर, इदानीम् ।

रेवती—विस्मरामि, ननु विस्मरामि । भवन्तस्तावत्प्रचलन्तु । अम्मो ! ते इमे पुनरपि प्रतिनिवृत्ताः । कः पुनरपि कथनीयशेषः ?

आश्विनश्रेष्ठी—अन्तिमतास्वदेक एव कथनीयशेषः । यत्, सत्यमेव त्वया

अपहृत मे मन , मथापि महता मोहेन त्वदधीन कृत तत् । अतस्त्वां विहाय प्रस्थान मरणप्रायम् एव मे । तथापि, यत् सकृत् अध्यवसित, तन्नून न कथमपि परिवर्तनीयम्। एतावदेव चरम कथनीयम्, यद् यत्र कुत्रापि, सुखिनी भव। ( गन्तु प्रवृत्तः पुन प्रतिनिवर्तते । ) मा पुनस्तथा वर्तेथा यथा त्वद्विषयक कौलीन मम श्रवणसरणिमागच्छेत् । यतः

गीतम् ( क्षण एक )

मानिता त्वं मदीया मया नूनमेकदा । दु खशोकद्वयं स्पृशतु मा त्वां कदा ॥ ध्रु० ॥ वञ्चितोपि त्वया, हितमेव तेऽर्थये ॥ सञ्चिता सत्पथं सुमतिमेवार्थयेः ॥ १ ॥ त्वां त्यजन्पीडितो, न तु वचो भञ्जये । साधयेय, ततो मुञ्च वाष्पद्वयम् ॥

रेवती—आगम्यता ननु । अपि सत्यमेव न पुनर्दर्शन भवेत् !

आश्विनश्रेष्ठी—अल पुनर्दर्शनस्य निर्देशेनापि । सकृन्मुखात्रि सृता शब्दा, धनुष इव शरा !

रेवती—सत्य तत् । किन्तु, साय न मया बहिर्गन्तव्य, नु ! अन्यथा आगमिष्यन्ति भवन्त', दर्शन तु न स्यात् ! अत. पृच्छामि ।

आश्विनश्रेष्ठी—अपि न भणित यत् अपगतेष्वपि प्राणेषु, न आगमिष्यामीति । तत्कुतोऽदर्शनचिन्तावसरः !

रेवती—तदाकलित मया । किन्तु स्वयमह सुरभि मिष्ट च दुग्ध सविधास्यामि । ननु भणामि, यदि नागमिष्यन्ति भवन्तस्तदा कुप्येयमहम् ।

आश्विनश्रेष्ठी—कुप्य यथेष्टम् । ( इति वदन् निष्क्रान्त । )

रेवती—यत्सत्यम्, अकृत्रिम खल्वेतेषा मय्यनुराग । किन्तु सर्वमेव व्याकुलीकृत तेन चित्रहतकेन । आदौ तावद् गृह गत्वा तदेव सुविहित करणीयम् ।

गीतम् । ( मेरा चित्त )

मदुपरि प्रियाणां प्रेम दृढम् । यत्प्रथम सक्त तच्छेयम् ॥ ध्रु० ॥
परीक्षितं खलु कषणैर्निकषे । तन्यपि नैतत्क्षीयते ॥ १ ॥
संशय पटले दूरसारिते । प्रकाशित स्यात्तन्निखिलम् ॥ २ ॥

इति तृतीयोऽङ्क ।

# चतुर्थोऽङ्कः ।

## प्रथमः प्रवेशः ।

( स्थलम्—आश्विनश्रेष्ठिनो गृहम् । )

आश्विनश्रेष्ठी—सुदृढं खलु आचकर्ष मां मनः । किन्तु, सुदृढतरत्वान्मे नियन्त्रितं तन्मया । अन्यथा दुष्करमभविष्यद्विपत्तेर्विमोचनम् । विषाक्ता-द्रेवलीनेत्रभल्लकप्रहाराद् धैर्येण आत्मानं विमोचितवान् इत्यत्र नाणुमात्रः संदेहः । अहमहमिकया पुरः सरन्तो महत्तमा अपि संभ्रान्ता अभविष्यन् । भवतु, यद् वृत्तं, तद् वृत्तमेव । यदि तु सा विश्वसनीया अभविष्यत्, परा काष्ठा मत्सौख्यस्य निर्भरविलसितस्य च्याचाप्स्यत । लक्षसंख्याकासु खलु युवतिषु सुन्दरतमा सा । अहो—किन्तु, संप्रति किमनेन विचारेण ? किं मे तस्या लावण्येन ? अपि लावण्यं नाम, अन्ततो गत्वा, न बाह्यावगुण्ठनमेव ? आसीत्, देहलतिका अतिशोभना आसीत् ।

गीतम् ( बंधन ना बांधो )

मृगनयना रसिक-मोहिनी । कामिनी साभवन्मञ्जुलमधु-रालापिनी । नवयौवनसंपन्न—रम्यगति-विलासिनी—॥ ध्रु० ॥ आह्लादकमुखचन्द्रोऽप्यासीत् । आसीत् दृष्टिः प्रेमरसवाहिनी ॥

किन्तु, अपि नैते बाह्या एवालङ्काराः ? आस्तां तावत् । संप्रति, अलं तस्या नाम्ना, पुनरपि तत्तद्गुणस्मरणेन वा । यः सकृद् विच्छिन्नः सम्बन्धः, विच्छिन्न एव स भवतु । नाहं स्मरिष्यामि ताम् । किन्तु, तत्स्मरणमपाकर्तुं कस्तावदुपायो विधीयताम् ? रेवति ! एवमस्ति विश्वास-घातस्त्वया विहितो नु । ( प्रविशति आषाढः । )

आषाढः—श्रेष्ठिमहाराय !

आश्विनश्रेष्ठी—भवतु, नाशो जगत्येव इति भणितव्यम्, आत्मा च मोचयितव्यः ( गुञ्जति । ) ' गणिकायाः सङ्गो न स्यात्, सङ्गो न स्याद् बन्धो । '

आषाढः—(स्वगतम्) गानावेशवशो ननु भर्ता। (प्रकाशम्) श्रेष्ठिमहोदय! श्रेष्ठिमहोदय! मम तावत्—

आश्विनश्रेष्ठी—(स्वगतम्) तर्हि, अध्यवसितमेतत्। नान्यथा कार्यनिर्वाहः। (दृष्ट्वा) कोन्वयम्? कथम्, आषाढः!

आषाढः—श्रेष्ठिमहोदय! पत्रमिदं प्राप्तम्।

आश्विनश्रेष्ठी—(स्वगतम्) एवमाचरेदिति न कदापि ध्यात, मत, स्वप्ने कल्पितं वा। (प्रकाशम्) किम्? किमुक्तं त्वया?

आषाढः—पत्रमिदं प्राप्तं भवन्नाम्ना अङ्कितम्।

आश्विनश्रेष्ठी—न तावदिदानीम्। देहि पुनः कदाचन। (स्वगतम्) भोक्ष्यते सा स्वकर्मफलम्। किमत्र आत्मनो मनसा व्यर्थमेव सन्तापितेन।

आषाढः—श्रेष्ठिमहाशय! अवलोक्यतां तावत्, केन एतत् प्रेषितमिति।

आश्विनश्रेष्ठी—किमभणः?

आषाढः—(अनुच्चैः स्वरेण) मञ्जुलवाटकान्ननु आगतम्, श्रेष्ठिमहाशय!

आश्विनश्रेष्ठी—रेवत्याः सकाशात्? तद् गच्छ, गच्छ! आदौ तावदपनय तत्। न मे तेन प्रयोजनम्। दूरतोऽपि नावलोकयिष्ये तत्। अपसर इतः। विपाटय तत्। विधेहि शतखण्डम्। भस्मशेषं कुरु तत्। अपेहि, नन्वपेहि।

आषाढः—(स्वगतम्) नन्वन्यदेव काण्डमेतत् भाति! गणिकादारिकया तया दृढमाहत इव भर्ता, येन विकृतिमीदृशीं गतः। (प्रकाशम्) श्रेष्ठिमहाशय! अपि सत्यमेव नयेयम्? अथवा—

आश्विनश्रेष्ठी—निरवकाशमत्र सर्वथा 'अथवा'दिकम्। मा तत्पत्र पुनर्दर्शय। क इदानीं सम्बन्धस्तया, तस्या पत्रेण वा!

आषाढः—श्रेष्ठिमहाशय! एव तया किंचित्—

आश्विनश्रेष्ठी—अभण पुनरपि 'तया' इति? मा नामापि तस्या मत्पुरः पुनरुच्चारय। सा नाम ईदृशी—(स्वगतम्) किन्तु, कुतोऽहं निन्देयं ताम्! यदि न दृष्टा, न अभिहिता, यदि तस्याः पत्रं न पठितं, यदि संदेशो नाकर्णितः, तदा भवेत् तत् पर्याप्तम्। ततः किं कर्तुं प्रभवेत्सा?

(प्रकाशम्) आषाढ! अद्य एव गत्वा ब्रूहि मे लेखकम् 'पर्यटनस्य सिद्धता क्रियताम्' इति। बृहच्च अश्वप्रवहणं मे संयोज्य आनय। गच्छ शीघ्रम्।

आषाढः—कथमियती त्वरा! मन्ये यदद्यतनं संकल्पम् अन्तरयेत् भवान्. श्वः प्रभाते यावत्, समीचीनं तदा भवेत्। येन कदाचित्—

आश्विनश्रेष्ठी—न हि, न हि। अस्यामेव घटिकायां प्रस्थातव्यम्। त्वं तावत्प्रवहणं संयोज्य आनय।

आषाढः—श्रेष्ठिमहाशय! ननु भणामि, श्वः प्रभाते, अनुकूले समये, न क्लेशः स्यात् इति। इदानीमेव प्रस्थाने कृते, यदि रात्रौ ज्योत्स्नाया आलोकनेन भवतो मनः परिवर्तेत, तदा मार्गापरिवर्तनखेदः स्यात्, तथा मा भूदिति—

आश्विनश्रेष्ठी—अहो प्राज्ञः खल्वयम्। मम मनो नाम परिवर्तेत, तामधिकृत्य! अरे! गणिकाकन्यका सा तावत्। कुतस्तस्या इयन्माहात्म्यम्! गच्छ, आदौ प्रवहणमानय। अपि च शापनीयेव सा, यथाहम् ईदृशः शिथिलो जनः इति।

आषाढः—श्रेष्ठिमहाशय! कुत एतदर्थम् इयान् पर्यटनसिद्धताप्रयासः? भवांस्तस्या अवरणः इति ज्ञात्वापि, स्वयमेव आगच्छेत् सिद्धिरिव सा भवत्पत्न्योः आत्मानम्।

आश्विनश्रेष्ठी—यद्यागमिष्यति एवमनादरयिष्यामि ताम्। किन्तु, किं तदानेन! तूष्णीम् आत्मनियोगमनुतिष्ठ।

आषाढः—यथाज्ञापयति श्रेष्ठिमहाशयः। किन्तु एकाकिन एव भवान्, प्रथमे विश्रमस्थाने यावत्, प्रबन्धः कार्यो नु? न कश्चिद् बहूनि वस्तूनि आवश्यकानि?

आश्विनश्रेष्ठी—स्वल्पानि आवश्यकानि, निःसंदेहम्। मात्र एको बहिर्वेशः। तदर्थं पर्याप्ता भवतु सामग्री।

आषाढः—शुभो मात्र एकः श्रेष्ठिनोदय!

आश्विनश्रेष्ठी—किं तेऽनया अनावश्यकया पृच्छया! उद्विग्नो मे मनसि विषादः। इतो यथावकाशः। सन्ति, मनसि निर्विण्णो। तत्, गच्छ।

( गन्तु प्रवर्तते आषाढ । ) नूनम्, एवमेव ता दण्डयिष्याम्यहम् । येन न मासावधि तद्दर्शनं स्यात् । तावता कालेन तद्विस्मरणमपि सभवे त्कदाचित् । तस्या स्मृताया प्रदहन्ति शल्यन्नानि । एतदपि सत्य, यदी पद्दूयते मे मन , सप्रत्यपि ता प्रत्याकृष्यत च । इदानीमपि मन्ये, किन्तु नहि नहि, नहि, नैव दुर्बलत मनागप्युचिता । इदानीं हि तद्गतविचारस्य मन.प्रवेशनिरोध एव पर्याप्त । किंतु ( उच्चै स्वरेण ) आषाढ ! रे आषाढ ! न त्वमिदानीमपि गत ! अवगत मया । आशसोऽसि मया ' भरमशेष तत्पत्र कुरु ' इति । न तु तत्कर्तुं प्रभवसि त्वम् । क्व खलु तत् पत्रम् ! क्षिप तत्, तत्र कोणे । अथवा, आनय तदित एव । अहमेव तद् व्यवस्थापयामि ।

आषाढ —( प्रतिनिवृत्य ) मया तु प्रथममेव अवगत यद् भवन्त अर्पयेरन् एतदिति । श्रेष्ठिमहाशय ! गृह्यता तदेतत् । अपि गच्छानि इदानीं प्रवहणमानेतुम् !

आश्विनश्रेष्ठी—किं मुहु पृच्छसि ! यावदह पञ्चशताङ्कान् गणयामि, ताव प्रवहणेन आगतव्यमत्र । ( 'यथाशापयति श्रेष्ठिमहोदय ' इत्युक्त्वा निष्क्रामति आषाढः । ) विशादयितव्यमेतदिति निश्चितमेव । किन्तु प्रसङ्ग तमधिकृत्य कीदृश समर्थनपाटवमस्मि प्रकटीकृतमिति पश्यामि तावत् । ( पत्रमुद्घाट्य पठितुमारभन । ) " प्रियवल्लभचरणयो नम्राया रेवत्या विज्ञापनाविशेषः । मुहूर्तादेव प्राक्तस्तत्ते भवद्दर्शने, कृत ईषत्परिहासो भवतो मया । तेन सप्रति दूयते मे मन । तस्मादेव क्षणान्मानस मे सशल्यमिव । दीनाया अस्या दास्या इम प्रमादमुदर सात्कृत्वा, अनुगृह्यतां दासी सकृद्दर्शनदानेन । येन य सशयो भवतो मनसि मा प्रति उद्भूत, अपनेष्यामि तम् । मूढया दास्या किमत पर लिखितव्यम् ! इति विज्ञापना ।' इति । अहो भ्रान्तिरस्या । मम सशयम् इयम् अपनेष्यति । अथ कस्य पुनर्मनसि सशय एव अवशिष्ट ! इदा प्रतीतिरेव हि जाता । सप्रति न कोऽप्यर्थश्चाटुवचनैरेताहशै । ( पत्र विराटयन् ) ' मानस मे सशल्यमिव ' ।—अहो कोमलता मानसस्य । ' प्रमादमुदरसात्कृत्वा —इति कीदृगीय विनम्रता ! किन्तु प्रमाद समावेशयेत् इ ते पर्याप्तेन खलु उदरावकाशेन भाव्यम् । ' मूढया दास्या किमत' पर

लिखितव्यम्? ननु सत्यमेव मूढा। अन्यथा, तया पत्रमेवैतन्न लिखितमभविष्यत्। किं भणितम्? 'वल्लभचरणयो' इति? न जाने कियन्तो मदन्या मादृशाः प्रियवल्लभा भवन्तीति। धूर्ता, कैतविनी, कृतघ्ना, विश्वासघातिनी, कण्ठच्छिदेव इयम्। (चूर्णीकृत पत्र प्रक्षिप्य) तद् भागधेय मे अनुकूलं, यत्क्षिप्रमेव लब्धवान् सत्याम्। तद्धि कथयन्नेव आस्त मे वैशाख—

गीतम् (ये गरज धाय धाय)

मोहमिमं मुञ्च मुञ्च। मा युज्यस्वाहिताय। मिष्टवोधमासहतम्। नाशृणवं तं सुहितम्। मत्तमना अभवमहम्। अन्धमन्वताध खण्डिताखिला ॥ १ ॥

(दृष्ट्वा) अहो एष वैशाख एव प्राप्त। (प्रविशति वैशाख।)

वैशाखश्रेष्ठी—अपि प्रकृतिस्थो मे सुहृद्? अस्ति वार्ता काचिन्नवा?

आश्विनश्रेष्ठी—इयमेव नवा वार्ता, यदह मास यावत्, नगराद् बहिः पर्यटनार्थं गमिष्यामि।

वैशाखश्रेष्ठी—कदा? कदा चाय कृतः सकल्प.?

आश्विनश्रेष्ठी—इदानीमेव। अयमह प्रस्थित एव। मुहूर्तमात्रेण आगमिष्यति प्रवहणम्।

वैशाखश्रेष्ठी—अपि एकाकी गमिष्यति भवान्? अथ सहितः?

आश्विनश्रेष्ठी—सा? ननु मया सार्धम्? सकृद्यदुक्तं तदुक्तम्। मा पुनरेव ब्रूहि।

वैशाखश्रेष्ठी—आश्विनश्रेष्ठिन्! यत्सत्य, यदि कुप्यसि, न मे चिन्ता। त्व नूनम् अकारणमेव रेवत्यै कुपितोऽसि। गतोऽहं तस्या गृहम्। सा खलु पत्रमेक ते लिखितुमना अभवत्।

आश्विनश्रेष्ठी—ननु पश्य, पश्य तान्खण्डान्। तस्याः पत्रस्यैव ते। अस्मिन्वारे निर्धारित मया यन्नाह पराजय स्वीकरिष्यामि।

वैशाखश्रेष्ठी—किन्तु, 'सर्पोऽयम्' इति मत्वा किं रज्ज्वा आहवया? यत्सत्य नैव तस्याः कोऽपि दोषः।

(गन्तु प्रवर्तते आषाढः।) नूनम्, एवमेव ता दण्डयिष्याम्यहम्। येन न मासावधि तद्दर्शनं स्यात्। तावता कालेन तद्विस्मरणमपि सम्भवेत्कदाचित्। तस्या स्मृताया प्रदहन्ति खल्वङ्गानि। एतदपि सत्यं, यदीपद्दूयते मे मनः, सम्प्रत्यपि ता प्रत्याकृष्यते च। इदानीमपि मन्ये, किन्तु नहि, नहि, नहि, नैव दुर्बलत मनागप्युचिता। इदानीं हि तद्गतविचारस्य मनःप्रवेशनिरोध एव पर्याप्तः। किन्तु (उच्चैः स्वरेण) आषाढ! रे आषाढ! न त्वमिदानीमपि गत? अवगत मया। आज्ञप्तोऽसि मया 'भस्मशेष तत्पत्रं कुरु' इति। न तु तत्कर्तुं प्रभवसि त्वम्। क्व खलु तत् पत्रम्? क्षिप तत्, तत्र कोणे। अथवा, आनय तदित एव। अहमेव तद् व्यवस्थापयामि।

आषाढः—(प्रतिनिवृत्य) मया तु प्रथममेव अवगतं यद् भवन्तः अर्थयेरन् एतदिति। श्रेष्ठिमहाशय! गृह्यतां तदेतत्। अपि गच्छानि इदानीं प्रवहणमानेतुम्?

आश्विनश्रेष्ठी—किं मुहु पृच्छसि? यावदहं पञ्चशताङ्कान् गणयामि, तावत्प्रवहणेन आगन्तव्यमत्र। ('यथाज्ञापयति श्रेष्ठिमहोदयः' इत्युक्त्वा निष्क्रामति आषाढः।) विपाटयितव्यमेतदिति निश्चितमेव। किन्तु, प्रसङ्गं तमधिकृत्य कीदृशं समर्थनपाटवमस्मिन्प्रकटीकृतमिति पश्यामि तावत्। (पत्रमुद्घाट्य पठितुमारभते।) "प्रियवल्लभचरणयो नम्राया रेवत्याः विज्ञापनाविशेषः। मुहूर्तादेव प्राक्सवृत्ते भवद्दर्शने, कृतं ईषत्परिहासो भवतो मया। तेन सम्प्रति दूयते मे मनः। तस्मादेव क्षणान्मानसं मे सशल्यमिव। दीनाया अस्या दास्याः इमं प्रमादमुदरसात्कृत्वा, अनुगृह्यतां दासी सकृद्दर्शनदानेन। येन यः संशयो भवतो मनसि मां प्रति उद्भूतः, अपनेष्यामि तम्। मूढया दास्या किमतः परं लिखितव्यम्? इति विज्ञापना।" इति। अहो भ्रान्तिरस्याः! मम संशयम्, इयम् अपनेष्यति। अथ कस्य पुनर्मनसि संशय एव अवशिष्टः? दृढा प्रतीतिरेव हि जाता। सम्प्रति न कोऽप्यर्थश्चाटुवचनैरेतादृशैः। (पत्रं विघाटयन्) 'मानसं मे सशल्यमिव'।—अहो कोमलता मानसस्य! 'प्रमादमुदरसात्कृत्वा'—इति कीदृगीय विनम्रता! किन्तु प्रमादं समावेशयत् इति पर्याप्तेन खलु उदारवकाशेन भाव्यम्। 'मूढया दास्या किमतः परं

लिखितव्यम् ? ननु सत्यमेव मूढा। अन्यथा, तया पत्रमेवैतन्न लिखित-मभविष्यत्। किं भणितम् ? 'वल्लभचरणयो' इति ? न जाने कियन्तो मदन्या मादृशाः प्रियवल्लभा भवन्तीति। धूर्ता, कैतविनी, कृतघ्ना, विश्वासघातिनी, कण्ठच्छिदेव इयम्। (चूर्णीकृत्य पत्रं प्रक्षिप्य) तद् भागधेयं मे अनुकूलं, यत्क्षिप्रमेव लब्धवान् सत्यम्। तद्धि कथयन्नेव आस्ते मे वैशाखः—

गीतम् ( ये गरज धाय धाय )

**मोहमिमं मुञ्च मुञ्च। मा युज्यस्वाहिताय। मिथ्योधमासहृतम्। नाशृणवं तं सुहितम्। मत्तमना अभवमहम्। अन्धमन्दताद्य खण्डिताखिला ॥ १ ॥**

( दृष्ट्वा ) अहो एष वैशाख एव मास। ( प्रविशति वैशाखः। )

**वैशाखश्रेष्ठी**—अपि प्रकृतिस्थो मे सुहृद् ? अस्ति वार्ता काचिन्नवा ?

**आश्विनश्रेष्ठी**—इयमेव नवा वार्ता, यदहं मासं यावत्, नगराद् बहिः पर्यटनार्थं गमिष्यामि।

**वैशाखश्रेष्ठी**—कदा ? कदा वाऽयं कृतः संकल्पः ?

**आश्विनश्रेष्ठी**—इदानीमेव। अयमहं प्रस्थित एव। मुहूर्तमात्रेण आग-मिष्यति प्रवहणम्।

**वैशाखश्रेष्ठी**—अपि एकाकी गमिष्यति भवान् ? अथ सहितः ?

**आश्विनश्रेष्ठी**—सा ? ननु मया सार्धम् ? सकृद्यदुक्तं तदुक्तम्। मा पुनरेव ब्रूहि।

**वैशाखश्रेष्ठी**—आश्विनश्रेष्ठिन् ! यत्सत्यं, यदि कुप्यसि, न मे चिन्ता। त्वं नूनम् अकारणमेव रेवत्यै कुपितोऽसि। गतोऽहं तस्या गृहम्। सा खलु पत्रमेकं ते लिखितुमना अभवत्।

**आश्विनश्रेष्ठी**—ननु पश्य, पश्य तान्खण्डान्। तस्याः पत्रस्यैव ते। असिन्वारे निर्धारितं मया यन्नाहं पराजयं स्वीकरिष्यामि।

**वैशाखश्रेष्ठी**—किन्तु, 'सर्पोऽयम्' इति मत्वा किं रज्ज्वा आहतया ? यत्सत्यं नैव तस्याः कोऽपि दोषः।

आश्विनश्रेष्ठी—वैशाख ! विश्वासघातिनीं दुर्वृत्तां तां नारीं त्वं समर्थयसि, मत्पुरः ! न जाने, किं मयात्र भणितव्यम् ।

वैशाखश्रेष्ठी—यदि सा तथाविधा अभविष्यत् नाहमेवमभणिष्यम् । किन्तु *सकल एव वृत्तान्तोऽवगतो मया । प्रस्तुते तावद्विषये त्वमेव प्रधानतो* दोषभागसि ।

आश्विनश्रेष्ठी—यद्येव प्रत्याययसि मां, तां गत्वा, दोषमात्मनः सद्यः स्वीकरिष्यामि । तत्कथय किं प्रतिपद्ये ?

वैशाखश्रेष्ठी—तदेहि गच्छावस्ताम् । सैव त्वां प्रत्याययेत् ।

आश्विनश्रेष्ठी—(सक्रोधम्) तां प्रतिपद्येय ? अपि उपहसितुं मामागत इव ? नामापि पुनस्तस्या न उच्चार्यम्, इति दृढः सङ्कल्पो मम । भणसि च 'तां गच्छाव ' इति । अहो वैपरीत्यं ते आग्रहस्य अथ 'तां दृष्ट्वा आगतोऽसि ' इति भणति । अपि गृहे एवास्ति सा ?

वैशाखश्रेष्ठी—आम् । किमन्यत्कुर्याद्वराकी ?

आश्विनश्रेष्ठी—भवतु, किं मम तया ? किन्तु, यदिदं सवृत्तम्, तदधिकृत्य, अपि दूयते तन्मनः ?

वैशाखश्रेष्ठी—'दूयते तन्मनः ?' आश्विनश्रेष्ठिन् ! किं कथयामि ते ? पुरा नैकवारं तद्विरुद्धं मया मन्त्रितं स्यात् । किन्तु, इदानीं प्रत्ययो मे जातः, यद् *वेशवनिता सत्यरीयं दूरीकरिष्यति यद्दिगीरपि सुजनतायाम्* । त्वया तथा दूषणैर्दर्पितायास्तस्या मुखान्नैकोऽप्यपशब्दो निःसृतः । अहो सर्वथा धन्यैव सा, या त्वां प्रशसन्ती एव स्थिता ।

आश्विनश्रेष्ठी—एवं भद्रा सा, इति स्वीकृतं मे । न तु प्रशंसामात्रेण विमोहयिष्ये । प्रशंसा निन्दा वा तस्या मुखान्निःसृता, तुल्यैव मे । अथ शृणोमि । किं तया भणितं त्वत्समक्षम् ? तत्कथय ।

वैशाखश्रेष्ठी—इत्थंभूतस्तया वृत्तान्तो निवेदितः । निवेदयन्त्यास्तस्या अविच्छिन्ना प्रवृत्ता अश्रुधारा । विचारय तावत् ।

आश्विनश्रेष्ठी—सम्यक्परिचितोऽस्मि सर्वैरेतैश्छद्मच्छलैः । सम्प्रति किं मे पिष्टपेषणेन ? अपि सत्यमेव रुदितं तया ?

**वैशाखश्रेष्ठी**—कण्ठेन ते यापे। ता तथा दीनवदना दृष्ट्वा मयापि परामृष्टे सकृन्नयने। केन नाम आत्मगौरवभावेन प्रेरित ता रोदयसि, इत्येतत् अनाकलनीयमेव मम।

**आश्विनश्रेष्ठी**—अपि बुद्धिपुर सर तामह रोदयिष्य इति मन्यसे? य फाल्गुनरायपत्न्या मे कथित तद्यदि अश्रोष्य, तदा नैवमवादिष्य।

**वैशाखश्रेष्ठी**—तदपि ज्ञात मया। सप्रति यत्पृच्छामि त मनोदेवतामात्मन सस्मृत्य प्रतिब्रूहि। यथाध्यवसितम्, सा त्वा रमाकान्तस्य मन्दिरे दृष्टवती। दत्त च त्वया चित्र तस्यै। देवताया समक्ष युवयो शपथ प्रतिज्ञा सवृत्ता। एतावत्पर्यन्त शोभन सर्वम्। तत सा गृह प्रस्थिता। सा नाम जातिपुष्पम् अतिपेलवम्। दारुकेन आतपेन आहता सा, यदि मार्गे मूर्च्छिता, अपि स तस्या दोष?

**आश्विनश्रेष्ठी**—अपि भ्रान्तचेता अहम् यत्ताम् एतदर्थं दूषयेयम्?

**वैशाखश्रेष्ठी**—अथ मूर्च्छिता सा यदा पतन प्रवणा, तदानीमेव सुदैवेन फाल्गुनरायमहोदयास्तत्रागतन्। ते सा सधृता, वीजनेन समाश्वासिता च। अप्ययमपराधस्तस्या? न्याय्यमुत्तर क्रियताम्।

**आश्विनश्रेष्ठी**—नायमपराधस्तस्या इति सर्वोऽपि प्रतिपद्येत।

**वैशाखश्रेष्ठी**—सम्यगाह भवान्। भीतभीता सा, तत्रापि न सम्यक्स माश्वस्ता। यदि एवभूते, हस्तात्प्रभ्रष्ट चित्र तया न ज्ञात, अपि पातकमेतत् तस्या स्यात्?

**आश्विनश्रेष्ठी**—कथमेतत्तस्या पातक स्यात्? एव ब्रुवाणेन शतमूर्खेण भाव्यम्।

**वैशाखश्रेष्ठी**—अथ तत्र पतित तच्चित्र यदि कस्यचिद्धस्त पतित स्यात्?

**आश्विनश्रेष्ठी**—चित्रविषयको न कश्चिद्दोषस्तस्या। तत्खलु अवगतपूर्वं मया। किन्तु फाल्गुनरायमहोदयाना पत्न्या य अप्रशस्तो व्यवहारोऽवलोकित, तत्र किं ब्रूया?

**वैशाखश्रेष्ठी**—अमव तदव वक्तुकाम। भो! प्रकटमव अस्तव्यस्त पतन्तीं तां फाल्गुनराय स्वाङ्के धृतवान्। ईदृगवस्थायाम् आया कृत्तिका ताम् आगमन पतिं च दृष्टवती। आदावव मत्सरेण दह्यमाने तस्या मनसि

यदि विपरीता कल्पना प्रादुर्भूता, किं तत्र रेवती कुर्यात्? तत्कथयतु सत्यमेव। यदि भवांस्तस्यामवस्थायामभविष्यत्, किं भवानकरिष्यत्?

आश्विनश्रेष्ठी—(विकसद्वदनः) अपि सत्य, सत्यमेतत्? सकलमपि सत्यमेवैतत् कथयसि? अप्ययमेव भूतार्थः? अपि कण्ठेन मे शप्त्वा ब्रवीषि?

वैशाखश्रेष्ठी—कण्ठेन ते शप्त्वा ब्रवीमि।

आश्विनश्रेष्ठी—तदयमहं प्रस्थितस्ताम्। तां पश्येयम्। क्षमां च तां याचेय। प्रत्याययेयं तां, हासयेयं च। तदनन्तरमेव मुखं ते दर्शयेयम्।

आषाढः—(अभ्यन्तरादागच्छन्) श्रेष्ठिमहाशय! सिद्धमिदं प्रवहणम्।

आश्विनश्रेष्ठी—अपेहि। नावश्यकं सम्प्रति प्रवहणम्। परिवर्तितो मे सङ्कल्पः।

आषाढः—एतत्तु मया प्रथममेव कथितम्। वियोजयिष्ये तदश्वान्। (निष्क्रान्तः।)

आश्विनश्रेष्ठी—साधु! साधु! वैशाख! अद्य खलु ते उपस्थित्या कथमपि जातो निर्वाहः। महानखल्वनर्थो अन्यथाभविष्यत्। अकारणमेव मया पीडिता सा। तस्या दर्शनमावश्यकम्। आषाढ! प्रवहणम्-अथवा, आस्तां तत्, पद्भ्यामेव गच्छाव। अहो अनभिज्ञता आर्यायाः कृत्ति कायाः। क्वेदं क्षुद्रं निमित्तम्? क्व चासौ दारुणः संशयः? आदौ तावत्फाल्गुनरायमहोदयेभ्यश्चित्रं गृह्णामि, तदेव च पुना रेवत्या अर्पयामि। नूनमेवकृते द्विगुणो मोदः प्राप्येत। वैशाख! गम्यतां तर्हि इदानीम्। अहमिदानीं फाल्गुनराय-निवासं गच्छामि। (निष्क्रान्तौ।)

---

## द्वितीयः प्रवेशः।

(स्थलम्—रेवत्या गृहम्।)

(ततः प्रविशति भाषमाणा रेवती।)

रेवती—(स्वगतम्) अहो अद्भुतम्। न नाम मूलम्, नाप्यग्रं वा कुत्रचित्। कथं तर्हि मनसि समुद्भूत एव संशयः? यत्सत्यं न तेषां मुखावलोकनमपि पुनः कार्यम्। किन्तु एतदपि मनसि प्रादुर्भवति—' कस्तावत्तेषां

दोप ! ' इति। आर्यया कृत्तिकया एतेषा मनसि आध्मातो विषवायुः, तेन च इत्थ सम्रान्त शीर्षमेतेषाम्। का नु वर्तते तत्र ? तारके ! अपि प्रतिनिवृत्त श्रेष्ठिन पत्र प्रापयन्नः ? ( प्रविशति तारका । )

तारका—न प्रतिनिवृत्त इदानीमपि।

रेवती—कुत. खलु नागत.। वस्तुतः न एतावान् विलम्बो भवितुमर्हति। कदा नु तान्द्रक्ष्यामि, सशय च तेषामपनेष्यामि, इति अत्युत्सुक मे मनः। चाण्डाल्या मया अकारणमेव निन्दिता अवमानिताश्चते। अपि च, न मया कोपस्तेषा प्रशमित' प्रत्युत साधिक्षेपवचनैः पीडिता एव ते मया। अथ किं वृत्त फाल्गुनराया-प्रति सदेशप्रापणार्थे प्रेषितस्य ?

तारका—तैः प्रतिसदिष्टम् 'अहमेव स्वय तत्रागन्तु प्रस्थित' इति। आगमिष्यन्त्येव अचिरात्।

रेवती—यदा आगच्छेयुस्तदा तैरपाकरणीय खलु कल्मष यत् आश्विन श्रेष्ठिना मनसि वर्तते। भवेदेव तदपाकृतमिति न निश्चितम्। तथापि मनस्तावत्समाहित भवेत्। अत पर तु न नामापि ईदृशस्य व्यवहारस्य ग्राह्यम्। शब्दोच्चारोऽपि, परमनियत, आनुकूल्येन च तेषा मनसः, विधेय । ( दृष्ट्वा ) एते खलु फाल्गुनरायमहोदया एव समाता'। तारके ! आगतेषु तेषु त्व तावद् बहिर्गच्छ। ( प्रविशति फाल्गुनराय । )

रेवती—आगम्यताम् । आसनमिदमलक्रियताम् । ननु प्रमुदितास्मि भवता समानिता मे विज्ञप्तिरिति।

फाल्गुनराय —ननु जनरीतिरेवैषा। कोऽत्र समानः ?

रेवती—सन्देशप्रेषणस्य तावदियदेव कारणम्, यद् भवता गृहे घटितो घटना-विशेष' कश्चन। तमधिकृत्य न तावन्मया किमपि वक्तव्यम् । किन्तु पीडितास्मि तस्य दाहेन, अतो भणितव्यम्।

फाल्गुनराय —त्व तावत्सकृदेव पीडिता। अह तु रात्रदिन, परीत एव तेन दाहेन प्लुष्यमाण काल यापयामि। एतदधिकृत्य कुत्र खलु गत्वा व्यवहार लेखयिष्यामि ?

रेवती —तत्किमत्र भणितव्यम् ? अथ तु, कृपया भवन्त. साह्य मे करिष्यन्ति चेत्, मोचयिष्ये तावदह पीडाया'।

फाल्गुनरायः—कथ शाम ते विधेयमति कथय।। येन न मया कार्यं किमपि परिहीयेत, इति सर्वभावेन ते कथयामि ।

रेवती—येय विपन्मयि आपतिता सा भवत कुटुम्बिन्या—

फाल्गुनरायः—अवगतं मया । तस्या एव हेतो. यद् घोर सङ्कट मय्यापतित तद्गर्णितमपि न त्वम् आकलयिष्यसि । भवतु किन्तु, किमाचरित तया ?

रेवती—ताभिः अह च, मम एते च, इत्यनयोः कलहः समुद्भावितः, उद्ध्वस्त च जन्मैव मम । ननु पृच्छामि, का खल्वपूर्वा हानिस्ताभां मया कारिता ? कथमहमपराद्धा तासु ?

फाल्गुनराय.—( स्वगतम् ) नवीनमेव किंचन कूटकमैतत्समुपस्थितम् । ( प्रकाशम् ) कीदृशोऽसौ कलहः समुद्भावितः, इति कथय तावत् ।

रेवती—कलह एव एव, यदस्माकमेते, मयि अत्यन्तम् अप्रसन्नाः कारिताः ।

फाल्गुनरायः—तस्याश्च सर्वानुकूलता तेन सम्पादिता, इत्येव नु ?

रेवती—कुतोऽहमेव भणेयम् ? किन्तु, आर्याया कृत्तिकाया मनसि, मा प्रति सपत्नीमत्सर प्रादुर्भूत, इति भूतार्थ एव ।

फाल्गुनराय —सपत्नीमत्सर ? त्वां प्रति ? कुतोऽसौ ?

रेवती—श्रीरमाकान्त एव जानाति । हा. नून पतन्ती अह भवद्भिः धृता नु ? विपरीत एव तस्यार्थस्ताभि. गृहीत । निवेदित चास्माकम् एतेभ्यः, यद् भवतो मम च-किं नामैतत् ?

फाल्गुनराय —अयि मिथ्यारोपिणि ! आत्मन कूटकानि निह्नोतु योजितः युक्तिरियमनया।

रेवती—देव एव जानाति यथा तद् भवेत् । भवन्त एव तावत्कथयन्तु अप्यक्षरमपि सत्यमस्मिन्नारोपे ? इति। अपि गणिकाया मे न काचन प्रतिष्ठा ?

फाल्गुनराय—त्व तावद्गीतचिन्ता भव । अहमेव तव तान्दृष्ट्वा निवेदयिष्ये । भवेन्नु पर्याप्तमेतत् ? किं नामधेय तत्रभवताम् ?

रेवती—क्षणादागमिष्यन्त्येव ते । नामधेय तेषाम् ' आश्विनश्रेष्ठी ' ति ।

फाल्गुनराय.—आश्विनश्रेष्ठी !

रेवती—आम्, कुतस्तु चकितचकिता एव भवन्तः ! अप्यस्ति परिचय इव तैः ! '

फाल्गुनरायः—' परिचय इव ! ' न यादृशस्तादृशः, सम्यक्परिचय इति वक्तव्यम् । यदा तीक्ष्ण दण्डयिष्यामि त, तदैव कदाचित् विस्मरिष्यामि परिचयम् ।

रेवती—( त्रस्ता ) अम्मो ! किं नामैतत् ?

फाल्गुनराय —कूटक्रमेतन्मम भार्याया इति क्षणात्प्राक् कथितमेव ते मया । तत्र सहाय. अयमपि तस्याः । ताभ्या मिथो मिलित्वा यथा त्वयि तथा मय्यपि कृत आरोपः, यदनुसार त्व च अह च-अपि न सर्वथा असत्यमेव इदम् !

रेवती—अग्निप्रवेशपूर्वक वक्ष्यामि यत्सर्वथा असत्यमिदम् । किन्तु, अपि आश्विनश्रेष्ठिन एवमाचरिष्यन्ति, इति भवता मतम् ?

फाल्गुनरायः—नेद मे मतमेव केवलम्, अपि तु प्रत्यय एव एष मम । अत एव मे एतावान्दाहस्तन्निमित्तः ।

रेवती—मम तावन्नैतत्सत्य भाति । अपि अवितथमेवैतत् ?

फाल्गुनरायः—कुतः सशयः ? चित्रमेतत् आश्विनश्रेष्ठिना तस्यै दत्तम् । ( तद्दर्शयति । ) मया चैतदाच्छिन्न तस्या हस्तात् । एतत्तया चुम्बित, आश्लिष्ट च वक्षसा, प्रत्यक्षीकृत मया । तद्ब्रूहि, कः सशयः सप्रति अवशिष्टः ?

रेवती—अपि चित्रमेतत्तैर्भवत्कुटुम्बिन्यै दत्तम् ? यद्येवम्, आरूढास्ते शठतायाः परा काष्ठाम् । स्वय परस्य समर्प्य, अकारण एव मया कलहः कृतः । तैरिद दत्तम्, इति यदि प्रमाणित भवेत्—

फाल्गुनरायः—मा तत्र तिलमात्रमपि सन्देह कुरु । चोर इव इतस्तत अवेक्षमाणः, मद्गृहान्निष्क्रामन्, निगूढ प्रचरश्च स्वयमालोकितः मया । वाक्सघर्षेण मे सवृत्त । निर्भर्त्सितश्चासौ खरतरैः शब्दैर्मया । कुतः, अत. परमपि सशयः ?

रेवती—कितवाः, ननु महान् कितवाः एव एते । कानि प्रतिश्रुतानि ! कति शपथाः ! कियन्मधु च स्रावित जिह्वायाम् ! किन्तु सकल कैतवमेतत् । सप्रति भवन्त एव मे शरणम् । किमन्यत्कथये ?

फाल्गुनराय —अल तत्र चिन्तया ! यदि नाहं सकल्पपरम्परामेव सकलां तस्य निहनिष्यामि, तदा नात्मान 'फाल्गुनराय' इति ख्यापयिष्यामि। तद् गच्छामीदानीम्। न कोऽपि लाभ, अस्य उद्घोषण। सम्यक्छर्दनीय सत्वरो।

रेवती—(नागवल्लीपत्र सुधया योजयन्ती) सम्यगुपहास्यता नीयताम्, यथा न पुनरुन्मुखो भवितुमपि उत्सहेत।

फाल्गुनराय—यावच्छक्य सम्पादयामि सकलम्। अपि तोषसे ?

रेवती—(ताम्बूल कुर्वाणा स्वगतम्) 'व्यर्थं मया पत्र लिखितम्' इति इदानीं भाति। (ताम्बूल प्रयच्छति, फाल्गुनराय आपृच्छ्य निष्क्रान्त।)

गीतम्। (बाट चलत छेडत)

एष नून भाति मम भाग्यकालो। मोहिता तेषा कपटभाषिते।
नापगताह ह्य सदनात् ॥ध्रु०॥ श्रीयुतसम्भावना दर्शयति।
आचरणे विपरीता रीति ॥ १ ॥ वरा हीनतरत्वारयोषिता।
स्फुट हि तनुमो भ्रमजालम् ॥ २ ॥

पुन पत्र लिखामि 'इदानीं मद्दर्शनार्थम् आगमनस्य नैव आवश्यकता। यावन्ति जातानि दर्शनानि तावन्ति पर्याप्तानि' इति। (निष्क्रान्ता।)

---

## तृतीयः प्रवेशः।

(आम्रराजिकोण। प्रविशति फाल्गुनराय।)

फाल्गुनराय —जात सन्ध्यासमय। प्रसरति अन्धकार। अदृश्यतामिव गत वस्तुजातम्। अथ कथ न सा स्वाती आगच्छति ? न खलु भाद्रव्येन अन्यदेव स्थान निर्दिष्टम् ? मया तावत्कथितम् 'आम्रराज्या कोण' इति। तेन कदाचित् भणित स्यात् 'कोण आम्रराजि।' इति। (निरीक्ष्य) किमिव तत् ? मनुष्यो विद्यते। अवगुण्ठनमपि दृश्यते। तस्मात्, स्त्रियाऽनया भाव्यम्। यदि च स्त्री, स्वात्येव। (कामयुतेन स्वरेण) अयि, अयि स्वाति ! अयि, इत इत एहि। सुष्ठु त्वया विहितम्। यस्मिन्नेव क्षणे आगन्तव्य तस्मिन्नेव क्षणे आगतासि। (सावगुण्ठना स्त्री प्रविशति।)

सावगुण्ठना—( भीतभीतम् ) प्राप्तास्मि तावत्सुरक्षिता । फाल्गुनरायाः ! भीतभीता खल्वहम् । अम्मो !

फाल्गुनराय —आ ! आ ! किं नु सवृत्तम् ?

सावगुण्ठना—दृश्यतामय सर्वाङ्गेषु कम्प । न हि न हि । अलमेतादृशे समये एकाकिन्याः सञ्चरणेन ।

फाल्गुनरायः—प्रथम तावत्किं वृत्तमित्यपि कथय ।

सावगुण्ठना—किं भवते निवेदयामि ! फाल्गुनरायाः ! आगच्छन्त्या मया तत्र परस्तात् धूर्तेश्वरहतक कोऽपि दृष्टः । न पुनरत्र निवेदयामि । मा पुनर्भवन्त सत्वर स्वगेह नयन्तु ।

फाल्गुनरायः—मम गेहम् ! अपि न गेहान्तरगमनेन प्रयोजन सफल स्यात् ?

सावगुण्ठना—नैव । अपगतेष्वपि प्राणेषु, नाहमन्यस्य गृह प्रविशेयम् ।

फाल्गुनरायः—( स्वगतम् ) इय तावदेव भणति । अथापि च... । किम् अथापि च ! विस्मृतमेव मया, यद् भार्या म नास्ति गृहेऽस्मिन्समये ! ( प्रकाशम् ) यदि तर्हि । किन्तु, यद्यपरस्य कस्यचिद् गेह गतौ अभविष्याव, कस्माद् भयमेव न उदपत्स्यत ।

सावगुण्ठना—अलमनेन सर्वेण । येन केन प्रकारेण नयन्तु मां भवन्त आत्मन एव गृहम् ।

फाल्गुनरायः—एव भवतु । यदि तर्हि । कुतस्तस्या एतावद्भयम् ? ( दूरस्थायिनं माधव्य प्रति ) अरे माधव्य ! इतस्तावदेहि । किं च । अरे ! यदा बहिर्निर्गता वयम्, न खलु सा गृहेऽभवत् ?

माधव्य.—( शनै पुरः सरति । ) नाभवत्, भर्तः !

फाल्गुनरायः—शृणु, त्व तावदग्रतो भव, तथा द्वारादिकमपावृणु । प्रदीप च द्वारान्तर्गत निर्वापय । तथा कुरु यथा प्रविशन्तौ नौ, न कश्चन पश्येत् । शृणु प्रयत्नम् इमं कुरु । अपि ज्ञातम् ? गच्छ शीघ्रम् ।

माधव्य —आम्, भर्त: ! ( निष्क्रान्तः । )

फाल्गुनरायः—( तां पृष्ठे हस्तेन परामृश्य ) साधु, साधु आगता त्वम्, प्रीतोऽस्मि ते । यदि इदानीं, नि शङ्कम्, आत्मान मया इयमयाय ।

फाल्गुनरायः—अल तत्र चिन्तया ! यदि नाहं संकल्पपरम्परामेव सकलां तस्य निहनिष्यामि, तदा नात्मानं 'फाल्गुनराय' इति ख्यापयिष्यामि। तद् गच्छामीदानीम्। न कोऽपि लाभः, अस्य उद्घोषेण। सम्यग्दर्शनीयः तत्त्वतो।

रेवती—(नागवल्लीपत्रं सुधया योजयन्ती) सम्यगुपहास्यतां नीयताम्, यथा न पुनरुन्मुखो भवितुमपि उत्सहेत।

फाल्गुनरायः—यावच्छक्यं सम्पादयामि सकलम्। अपि तोषस्ते ?

रेवती—(ताम्बूलं कुर्वाणा स्वगतम्) 'व्यर्थं मया पत्रं लिखितम्' इति इदानीं भाति। (ताम्बूलं प्रयच्छति, फाल्गुनरायः आपृच्छ्य निष्कान्तः।)

गीतम्। (वाट चलत छेडत)

एष नूनं भाति मम भाग्यकालो। मोहिता तेषां कपटभाषितैः।
नापगताहं ह्य सदनात् ॥ध्रु०॥ श्रीयुतसम्भावनां दर्शयति।
आचरणे विपरीता रीतिं ॥ १ ॥ धरा हीनतरवारयोषिताः।
स्फुटं हि तनुमो भ्रमजालम् ॥ २ ॥

पुनः पत्रं लिखामि 'इदानीं मद्दर्शनार्थम् आगमनस्य नैव आवश्यकता। यावन्ति जातानि दर्शनानि तावन्ति पर्याप्तानि' इति। (निष्क्रान्ता।)

## तृतीयः प्रवेशः।

(आम्रराजिकोणः। प्रविशति फाल्गुनरायः।)

फाल्गुनरायः—जातः सन्ध्यासमयः। प्रसरति अन्धकारः। अदृश्यतामिव गतं वस्तुजातम्। अथ कथं न सा स्वाती आगच्छति ? न खलु मादृश्येन अन्यदेव स्थानं निर्दिष्टम् ? मया तावत्कथितम् 'आम्रराज्याः कोणः' इति। तेन कदाचित् भणितं स्यात् 'कोणः आम्रराजिः।' इति। (निरीक्ष्य) किमिव तत् ? मनुष्यो विद्यते। अवगुण्ठनमपि दृश्यते। तस्मात्, स्त्रियाऽनया भाव्यम्। यदि च स्त्री, स्वात्येव। (कासयुतेन स्वरेण) अयि, अयि स्वाति ! अयि, इत इत एहि। सुष्ठु त्वया विहितम्। यस्मिन्नेव क्षणे आगन्तव्यं तस्मिन्नेव क्षणे आगतासि। (सावगुण्ठना स्त्री प्रविशति।)

सावगुण्ठना—( भीतभीतम् ) प्राप्तास्मि तावत्सुरक्षिता । फाल्गुनरायाः ! भीतभीता खल्वहम् । अम्मो !

फाल्गुनराय —आ ! आ ! किं नु सवृत्तम् ?

सावगुण्ठना—दश्यतामय सर्वाङ्गेषु कम्प । न हि न हि । अलमेतादृशे समये एकाकिन्याः सञ्चरणेन ।

फाल्गुनरायः—प्रथम तावत्किं वृत्तमित्यपि कथय ।

सावगुण्ठना—किं भवते निवेदयामि ? फाल्गुनरायाः ! आगच्छन्त्या मया तत्र परस्तात् धृष्टेश्वरहतक कोऽपि दृष्टः । न पुनरत्र निवेदयामि । मा पुनर्भवन्त, सत्वर स्वगेह नयन्तु ।

फाल्गुनराय.—मम गेहम् ! अपि न गेहान्तरगमनेन प्रयोजन सफल स्यात् !

सावगुण्ठना—नैव । अपगतेष्वपि प्राणेषु, नाहमन्यस्य गृह प्रविशेयम् ।

फाल्गुनरायः—( स्वगतम् ) इय तावदेव भणति । अथापि च... । किम् अथापि च ? विस्मृतमेव मया, यद् भार्या मे नास्ति गृहेऽस्मिन्समये । ( प्रकाशम् ) यदि तर्हि । किन्तु, यद्यपरस्य कस्यचिद् गेह गतौ अभविष्याव, कलत्राद् भयमेव न उदपत्स्यत ।

सावगुण्ठना—अलमनेन सर्वेण । येन केन प्रकारेण नयन्तु मा भवन्त *आत्मन एव गृहम् ।*

फाल्गुनरायः—एव भवतु । यदि तर्हि । कुतस्तस्या एतावद्भयम् ? ( दूरस्थापितं भादव्य प्रति ) अरे भादव्य ! इतस्तावदेहि । किं च । अरे ! यदा बहिर्निर्गता वयम्, न खलु सा गृहेऽभवत् ?

भादव्य.—( शनै पुरः सरति । ) नासन्, भर्त. !

फाल्गुनरायः—शृणु, त्व तावदग्रतो भव, तथा द्वारादिकमपावृणु । प्रदीप च द्वारान्तर्गत निर्वापय । तथा कुरु यथा प्रविशन्तौ नौ, न कश्चन पश्येत् । सुष्ठु प्रबन्धम् इम कुरु । अपि ज्ञातम् ? गच्छ शीघ्रम् ।

भादव्य —आम्, भर्त ! ( निष्क्रान्तः । )

फाल्गुनरायः—( ता पृष्ठे हस्तेन परामृश्य ) साधु, साधु, आगता त्वम्, प्रीतोऽस्मि ते । यदि इदानीं, नि शब्दम्, आत्मान मया व्यवधाय ।

सावगुण्ठना—न खलु विदितमेतत्त्वयाद् भवता गृहे ।

फाल्गुनरायः—असम्भाव्यमेवैतत् । इतो मम, ततश्च तवैव शातम् । (निष्क्रान्तौ ।)

---

## चतुर्थः प्रवेशः ।

(स्थलम्—फाल्गुनरायस्य निवासः ।)

(ततः प्रविशति आश्विनश्रेष्ठी रोहिणी च ।)

रोहिणी—अहो महानलत्वनर्थः संवृत्तः । एतेषां मनसि ताः उद्दिश्य संशयः, तासां मनसि च एतान्प्रति । सर्वोऽप्ययं तस्य भवद्भिर्निर्दिष्टस्य चित्रस्य प्रभावः ।

आश्विनश्रेष्ठी—संभ्रमस्यास्य स्पष्टीकरणार्थमेव सहेतुकम् अत्रागतः ! अस्मिंस्तावद्विषये मम फाल्गुनरायमहोदयानां दर्शनमनिवार्यमेव । नात्र उपायान्तरम् । अतः, तिष्ठाम्यत्र तेषामागमनं यावत् ।

रोहिणी—भवद्भिर्नात्र उपवेष्टव्यमिति तावन्मे भाति । भवतामत्र उपस्थितिर्नाम प्रदीप्तेऽग्नौ तैलसिञ्चनमिव भवेत् ।

आश्विनश्रेष्ठी—तत्कथमिव ?

रोहिणी—कथमिति कथं शापये ? किन्तु, भवतामत्र अनुपवेशनमेव वरम् । यदि इष्टम्, मुहूर्तेन पुनरागच्छन्तु भवन्तः । सम्प्रति तु साधयन्तु । (सविस्मयत्रासम्) अम्मो ! प्राप्ताः खलु ते एते । तेषामेवाय शब्दः । तदपेत, शीघ्रं प्रचलत, अनेन द्वारेण । अथ कथमेतान्बोधयामि ? यदि भवन्तस्तैरवलोकिता अस्मिन्गृहे, स्वामिन्याः सर्वनाश एव असौ शायताम् । स्वामिनीं द्रष्टुं भवन्त आगता, इति यदि सकृत्तेषां मदः स्यात् न देवोऽपि तमपाकर्तुं क्षमो भवेत् ।

आश्विनश्रेष्ठी—किन्तु अहं तानेव सम्यग्बोधयिष्यामि ।

रोहिणी—आम्, यथाभिलषितं बोधयिष्यन्ति भवन्तः, यदि नाम बोधनं तैरिष्टम् । (श्रुत्वा) हा हन्त ! तथैव संवृत्तम् ! इत एवायान्ति इति गम्यते । द्रष्टुं तावदागच्छामि !

**आश्विनश्रेष्ठी**—अहो मूर्खता अस्याः। अकारणमेव परस्ता भणतु इय यत्किंचन। अहं फाल्गुनरायमहोदयान् द्रक्ष्याम्येव।

**रोहिणी**—(त्वरया) ते एव, ननु ते एव, आगताः। सार्धंच तैरस्ति काचन सावगुण्ठना स्त्री।

**आश्विनश्रेष्ठी**—(स्वगतम्) सावगुण्ठना स्त्री! न खलु इय रेवती। अयम् उद्भूतः पुनः सशय। (प्रकाशम्) अपि दृष्ट तस्या मुखम्?

**रोहिणी**—भो. सावगुण्ठना सा इति भणित नु? किन्तु कृपया यथानिर्दिष्टं निगूहन्तु आत्मान भवन्तः। ननु क्रियतामेव मयि अनुग्रह एतावान्।

**आश्विनश्रेष्ठी**—बाढम्, निगूहाम्यात्मानम्। मयापि ज्ञातव्यमेव का सा अवगुण्ठनवतीति। अथ, कुत्र निगूहाम्यात्मानम्? अप्यस्ति कक्षान्तरम्?

**रोहिणी**—फाल्गुनराय-गमन यावत् अस्मिन्नेव कक्षे उपविशन्तु भवन्त। नातिदीर्घ-घटिकामात्र अर्धघटिकामात्रमेव वा-निगूहनमावश्यक भवेत्। सम्प्रागच्छन्ति भवन्त? त्वर्यतां तर्हि।

**आश्विनश्रेष्ठी**—(हस्तपटक-उपानद्द्वयादिकं गृह्णन्) चल, कक्षे निगूहस्व, पेटिकाया निगूहस्व, यथावश्यक शयने वा निगूहस्व, यत्रकुत्रचित् निगूहस्व माम्। चल। (स्वगतम्) यदि सा रेवती स्यात् तर्हि—

**रोहिणी**—(त कक्षे प्रवेश्य) हुँ-उपविश्यतामत्र। अह पुनर्बहिस्तालक निधास्यामि। यथा न चिन्तायाः कारण भवेत्। निधास्यामि नु?

**आश्विनश्रेष्ठी**—हुँ कुत एक एव तालक.? यथावश्यक, तालकद्वय निधेहि। (सा तालक निधाय निष्क्रान्ता।)

(ततः प्रविशति फाल्गुनराय सावगुण्ठना च।)

**फाल्गुनराय**—अनुमन्यस्व यन्मया कथितम्। यदिच्छसि तत्ते प्रदास्यामि। ननु अपाक्रियतां सम्प्रति मुखावगुण्ठनम्।

**सावगुण्ठना**—मा मैवम्। अपि आकर्णित भवद्भिः? जनः कश्चन भाषते। न जाने किं भवेत्, यदि कश्चन पश्येत्।

**फाल्गुनरायः**—कः पुनरागमिष्यति अत्र द्रष्टुम्? अतिभीरुका नन्वसि। अस्मिन्नवसरे कुरु मे वचनम्। शो, यत्नाद् त्वा यावज्जीव विस्मरिष्यामि।

**सावगुण्ठना**—यदि पुनर्भवतो पत्न्या इद ज्ञात स्यात्, यद् भवतो मम च एव रह सङ्गत सवृत्त, न मे प्राणा सुरक्षिता ।

**फाल्गुनराय**—कथ तु ज्ञात स्यात् ! हूँ, तदपाकुरु तावदवगुण्ठनम् ।

**सावगुण्ठना**—नापाकरोमि । पश्येत्कश्चन ।

**फाल्गुनराय**—द्वारे तावदर्गला दत्त्वाऽऽगच्छामि । स्याच्च वा तदपि पर्याप्तम् ! ( तथा करोति । ) एता स्त्रियो हि नाम परममीरुका ।

**सावगुण्ठना**—अन्यथा दम्पती युवा मिथ कलह कृत्वा एकीभविष्यथ, मम पुनर्भवन्त च भवन्तीं च अन्तरा, मरणमापतेत् ।

**फाल्गुनराय**—पुनरपि तदेवैतत्ते भणितम् । अयि अपि सकृद्वियोजित फल, भवेत्कदाचन पुन सयोजित वृक्षेण ! तत्रापि तथा नामास्मि उद्वेजितस्तस्या अवहीनाया भार्याया, यथा न मुखमपि पश्यामि तस्या अत परम् । अपास्त तर्हि इतरत् सुदूरम् ।

**सावगुण्ठना**—किन्तु किं प्रमाणमस्य वचनस्य सत्यताया !

**फाल्गुनराय**—कण्ठेन ते शपे ! अपि पर्याप्तमेतत् !

**सावगुण्ठना**—तदिदमपाकृत मया अवगुण्ठनम् । ( तथा कृत्वा तिष्ठति । ) किम् ! कुत इय चकितचकितता ! कुतो च मत्त्रासो भवताम् !

**फाल्गुनराय**—( सभ्रान्त ) अहो भार्या प्रिय मे !

**कृत्तिका**—तत्कथ्यता महाराज ! ननु भणामि महाराज ! कुतो वदन-नीरज-निमीलनमिदम्, कुतश्च मूकतेयम् ! अथवा सशपथ स्वात्यै प्रतिश्रुतम्, अतो नाह लक्षणीया ! अपि गृहीता, न वा, भवन्त सम्यक् ! न इदानीमपि युक्ति काचन प्रतिभाति !

**फाल्गुनराय**—भण यथेष्टम् । गर्दभो भाद्रव्य । तेन पैशु यमिदमाचरितम् । कथमिति विवृणोमि तावत्—

**कृत्तिका**—विवृण्वन्तु, विवृण्वन्तु भवन्त । 'गर्दभो' भाद्रव्य ! तेन खलु विप्रलब्धोऽय 'मुग्ध' शम्भु !

**फाल्गुनराय**—नैव तत्, प्रियतमे !

**कृत्तिका**—एवमिदम् । ननु क्षणादेव अवहीनाऽऽह प्रियतमापि ताव सवृत्ता !

'उद्वेजितोऽस्मि तस्याः' न मुखमपि पश्यामि तस्या अतःपरम्। अपास्तं तर्हि इतरत् सुदूरम्।' इदमपि भवन्त एव क्षणात्प्राक् भणितवन्तो नु ?

फाल्गुनरायः—अयि त्वद्विषयकं संशयम्, अपाकर्तुं मम मनसः, युक्तिरेषा योजिता। एतावदेव।

कृत्तिका—'अस्मिन्मत्कार्ये विहिते, न त्वा यावज्जीवं विस्मरिष्यामि'— एतत्सकलमपि युक्तेरङ्गभूतमेव ?

फाल्गुनरायः—अथ किमन्यत् ? शतं मया, यत्तस्मै त्वत्पै प्रेषितः सन्देशस्त्वया अवगत. स्यात्, ततः आगमिष्यसि च त्वं मा द्रष्टुम् इति सर्वमेतत्प्रागेव मया सम्यग् योजितमासीत्। यल्लोका भणन्ति, मिथ्यैव तत्, अकारण एव संशयः सर्वथा अनिष्टः, इति अवगतं ते भवतु, इत्यनेन प्रयोजनेन इद मया विहितम्। अपि आकलितं त्वया ?

कृत्तिका—ननु परम-सुभगम् इद विहितवन्तो भवन्तः। इदानीं आत्रे मे पत्र प्रेष्य, निमन्त्रये तमत्र।

फाल्गुनरायः—ननु सुखेन निःसंकोचं च निमन्त्रयस्व। त्वमेव तत्र उपहसनीया भविष्यसि।

कृत्तिका—द्रक्ष्यामि क उपहसनीयो भविष्यतीति। (कक्षस्य द्वारमुपागम्य) तालकः केन निहितो द्वारे ? न खलु भवद्भिः ? आम्, आकलितम्। मां गृहाद् गतां दृष्ट्वा, कापि इयम् औषधसेवनाय कक्षे उपविष्टा, इति भाति।

फाल्गुनरायः—(हसन्) साधु ! साधु ! सुष्ठु आकलितं त्वया। अहो ते मूढता !

कृत्तिका—अविरोधेन तालकस्य कुञ्चिका दीयताम्। अन्यथा, भङ्क्त्वमं तालकं द्रक्ष्यामि जनमभ्यन्तरे वर्तमानम्। तद्दृत्वा न स्थास्यामि।

फाल्गुनरायः—नैव स्थास्यसि। ननु सुष्ठु जानामि ते दुराग्रहित्वम्।

कृत्तिका—अयि का तत्र वर्तते ? रोहिणि ! पश्यामि तावत् का नाम इतका मम कक्षे उपविष्टा इति। (प्रविशति रोहिणी।)

कृत्तिका—कथय तावत्, क्वास्ते तालकस्य कुञ्चिका।

रोहिणी—(सभयम्) स्वामिनि ! ननु मत्कर्णपटस्ति।

कृत्तिका—देहि तां सत्वरम्।

रोहिणी—(कर्णे कथयति।) मेदानीं प्रार्थयता भवती। (प्रकाशम्) मत्सविधेऽस्ति इति भणितं, स्वामिनि! किन्तु नास्ति मत्सविधे। (मन्दस्वरम्) गतेषु तेषु प्रार्थ्यताम्। न सम्प्रति।

कृत्तिका—'न सम्प्रति प्रार्थ्यताम्' इति किमेतावता? का त्वं प्रतिषेधयन्ती? तद्देहि तामत्र।

फाल्गुनरायः—(स्वगतम्) 'अस्ति' इत्यभणत्। तथापि किं न प्रयच्छति? ननु, अयमेव 'तत्रम्' इव दृश्यते। (प्रकाशम्) मा तस्यै देहि। मदस्ते समर्पय।

कृत्तिका—कुतस्तत्? ननु ममैव प्रयोजनं तया। अयि देहि।

रोहिणी—हस्तात्प्रभ्रष्टा कुत्रचित्। (मन्दस्वरम्) मा सम्प्रति प्रार्थयता भवती, इति ननु भणामि।

कृत्तिका—न तादृशं किञ्चिच्छ्रोष्यामि।

रोहिणी—गृह्यतां तर्हि इयम्। (प्रयच्छति।) (स्वगतम्) सम्प्रति प्रपलायनमेव अतो वरम्। (निष्क्रान्ता।)

कृत्तिका—(कुञ्चिकामादाय तालकमपाकुर्वाणा) इदम् अतिरोचकमिदानीं प्रदर्शयामि भवद्भ्यः।

फालगुनराय—नन्ववश्यं प्रदर्श्यताम्। अयमस्मि सिद्धस्तदवलोकयितुम्।

कृत्तिका—का नु वर्तते तत्राभ्यन्तरे? आगच्छ तर्हि बहिस्तावत्।

आश्विनश्रेष्ठी—(कक्षाद् बहिरागत्य) अयमहमस्मि आश्विनश्रेष्ठी।

कृत्तिका—(चकितम्) अम्मो! कुतो भवानत्र कक्षे?

फालगुनराय—कथमायाता, कुत आयाता एते इति सुविदितं तव च, तेषां च। कुतो व्यर्थं पृच्छसि? यथामन्त्रितं नवायाता।

आश्विनश्रेष्ठी—मदागमनं कदाचिद् भवने विचित्रं किंचिद् भायात्, किन्तु—

फालगुनराय—यथेष्टम् अपलपन्तु भवन्तः। सम्प्रति भवताम् 'आम्' इति कथितम् 'ओम्' इत्येव अनया समर्थितं भवेत्।

आश्विनश्रेष्ठी—तथापि, कुतोऽहमत्रागत इति कथयामि। तदनन्तरं यथाकामं प्रलपन्तु भवन्तः। भवत्सविधे यः मे चित्रं वर्तते, तत्तावत् भवता सकाशात् प्रत्यादातुमागतोऽस्मि। यतः, आवश्यकं तन्मम।

फाल्गुनरायः—आवश्यकमेव भवितुमर्हति तत्। ममापि तदतीव आवश्यकम्। 'कुतः?' इति यदि पृच्छा, तर्हि एतदुत्तरम्-युवयोर्द्वयोर्गाढस्य सम्पर्कस्य प्रमाणमेतदेकम्।

कृत्तिका—ननु किमुक्तवन्तो भवन्तः? 'द्वयोरावयोः गाढस्य सम्पर्कस्य' इति? पुनस्तावदुच्यताम्। भो आश्विनश्रेष्ठिन्! कुतो भवानत्र प्राप्तः, कथं मम कक्षं प्रविष्टः, इति सर्वमेव इदं स्पष्टीक्रियताम्।

फाल्गुनरायः—भोः सा खलु पृच्छति। इदानीमपि तावत् कथयन्तु भवन्तः। न खल्विदानीमपि मनसः किंचिदुत्तरं प्रतिभाति?

आश्विनश्रेष्ठी—कुत आयात इति अचिरात्प्राक् कथितमेव। 'कथं प्रविष्टः' इति पृच्छाया प्रतिब्रवीमि 'रोहिण्या अहमत्र निगूह्य उपवेशित' इति।

फाल्गुनरायः—तत्कोऽत्र दोषः? समीचीनमेव तथा कृतम्! पूर्वसंकेतानुसारेण तत्—

आश्विनश्रेष्ठी—नैव किमपि संकेतितमासीत्।

कृत्तिका—एतेषामागमनविषयकम् अक्षरमपि न मे ज्ञातपूर्वम्।

फाल्गुनरायः—तेन हि सु-संवादः, द्वयो। न उभाभ्यामपि ज्ञातपूर्वं नु? अत्र को विसंवादः?

आश्विनश्रेष्ठी—निरर्थक ईदृशो वादः। दीयतां मे चित्रं तावत्।

फाल्गुनरायः—चित्रं नैव प्राप्स्येत।

आश्विनश्रेष्ठी—अगृहीत्वा च तत्, नैवात. प्रचलिष्यामि। यदि तद्विरोधं समर्प्येत, समीचीनं स्यात्, अन्यथा—

फाल्गुनरायः—अन्यथा, किं करिष्यति भवान्? नाहमीदृशैर्भीषणवचोभिः त्रासनीयः।

आश्विनश्रेष्ठी—न पुनरहमपि भयकरशब्दानेव पर्याप्तान्मन्ये। सद्य एव दीयतां चित्रम्, अन्यथा अपि दृष्टा स्य मे असिका!

फाल्गुनरायः—(चकित स्वगतम्) आम् ज्ञातम्। केनाप्युपायेन कलहमुत्पाद्य उभावपि मां हन्तुकामौ। अयं च मन्त्रः मम भार्यया एव दत्तः।

आश्विनश्रेष्ठी—अपि अवलोकिता ?

फाल्गुनरायः—अवलोकिता भवदसिका। ममाप्यसिको प्रादर्शयिष्य भवदृष्य.। किन्तु, निःशङ्काया अस्या भार्यायाः कृते, नाहमिच्छामि भवन्तु शत्र प्रयोक्तुम्। (चित्र निष्कृष्य) अन्यच। तृणाय मन्येह चित्रमेतत्। तद् अपनयन्तु भवन्तः भवदीयमिदम्। (भूमौ तत्क्षिपति।) चित्रेण च तेन सार्धं नीयताम् इयमपि—

पद्यम् (चतुर्भुज)

याहि रे शीघ्रमविरोधमित। प्रियं पात्रमेतत्सार्धं नय। गृहे डाकिनी न स्यादेषा। त्व करशस्त्रैः पतिं घातयेत्। ध्रुवं पाययेन्मां विषचषकम्। कालसर्पिणी दष्टुमुद्यता। प्रत्येति न मे तस्यां हृदयम् ॥ १ ॥

कृत्तिका—अथ किं ममापि भवद्गृहनिवासेन ? अस्ति मे भ्राता। पाल यिष्यत्यसौ माम्।

फाल्गुनराय—इममद्यतन वृत्तान्त लिखित्वा तस्मै प्रेषयामि। द्रक्ष्यामि च कथमसौ त्वां पालयिष्यतीति। एष प्रस्थितोस्मि तदेव सम्पादयितुम्। तन्मयजानीहि। पिशाचिनी। डाकिनी।

कृत्तिका—भवान् लिखतु। अहमपि लिखामि। त एते भर्तारो नाम राक्षसाः, ब्रह्मराक्षसाः। रोहिणि ! अयि रोहिणि ! (निष्क्रान्ता।)

आश्विनश्रेष्ठी—अथ ब्रह्मराक्षस। इयमपि पिशाचिनी। अहो 'सममत्र समन युज्यते।' किन्तु, कोऽहम् ? ननु रेवत्या दीपिकाधारी ! इदानीं मनुतापदीपिका प्रज्वाल्य, तस्यामनुरागतैलं निषिच्य, चित्रमेतत्तस्या उपायनीकरोमि, 'उदयोऽस्तु ते, उदयोऽस्तु ते' इति उद्घोषं कुर्वाणः। 'बलवदसि त्वयि अपराद्धः। क्षमां याचे।' इति क्षमां प्रार्थये च। तत परम् इच्छा तदीया, दैवमस्मदीय च। यद्भवेत्, तद् भवतु।



# पञ्चमोऽङ्कः ।

## प्रथमः प्रवेशः ।

( स्थलम्—रेवत्या गृहम् । )

( ततः प्रविशति रेवती तारका च । )

रेवती—( स्वगतम् ) ननु सङ्कोच एव ईदृशो मनुष्यान् बाधते । यस्तस्य दुर्जनो नाम दूरत एव वन्द्य. । अयि तारके ! अपि श्रुतं त्वया कथं पैशुन्य माचरितम् आश्विनश्रेष्ठिभिः, इति ।

तारका—आम् श्रुतम् ।

रेवती—इयन्ति वचनानि शपथवाक्यानि च कृत्वा रमाकान्तसमक्ष पाणिग्रहणविधिमनुष्ठाय पर्यवसाने 'प्रकाशमेव विधेयः विवाहः' इति निश्चित्य च अन्ते वञ्चिता तैरहमेवम् । कृतमनेन । त्वं तावदञ्जसा गत्वा निवेदय 'अद्यप्रभृति अन्तरिता रेवती भवताम्, भवन्तश्च रेवत्या.' इति । निःसन्देहं च कथय मद्वचनात् 'नाहं भवन्तं पश्येयम्, न वा भवता सम्भाषेय, न पत्रं भवत्प्रेषितं पठेयम्, न भवत्सेवकेन सल्लापमपि कुर्याम्, न वा सन्देशं केनानीतं शृणुयाम्' इति । अप्याकलितं यत्कथनीयम् ?

तारका—आकलितम् । किन्तु, अपि नैतदतिरिक्तमिव ?

रेवती—नातिरिक्तं, न्यूनं वा । तद् गत्वा कथयैवमेव ।

तारका—ननु भणामि—

रेवती—मा भण किञ्चिदपि । ईदृशा जना एवमेव दण्ड्याः ।

तारका—किन्तु स्वामिनि ! त एवागताः । पश्यतु भवती । सम्प्रति—

रेवती—आयान्तु तावत् । अहं पुनरुपरितनीं भूमिं गत्वोपविशामि । आगतांश्च तान्, यन्मया मुहूर्तात्प्राक् ते कथितं तत्तथैव ब्रूहि ! ( गच्छन्ती परावृत्य ) गतेषु तेषु प्रत्यागमिष्यामि । ( निष्क्रान्ता । )

( ततः प्रविशति आश्विनश्रेष्ठी । )

आश्विनश्रेष्ठी—तारके ! अप्यस्ति रेवती गृहे ?

तारका—आम्, अथ त्वाशप्तास्मि आर्यया भरते स्वयं निवेदनम् 'न दर्शनं भविष्यति' इति।

आश्विनश्रेष्ठी:—कुतः खलु कारणात्?

तारका—स्यात् यत्किंचन। किन्तु ह्यः सायं फाल्गुनरायाः अत्रागताः। मन्ये तैरेव स्वामिन्या मनसि किंचिदुद्भावितं स्यात्।

आश्विनश्रेष्ठी—अपि रेवतीं द्रष्टुं फाल्गुनराय आगतः? तेन हि स्पष्टीकरणार्थमस्य विषयस्य अवश्यं मया रेवती द्रष्टव्या।

तारका—न हि, नहि। न भवतः सन्देशः श्राव्य', पत्रं वा द्रष्टव्यमिति व्यवसितं ताभिः। दूरापेते तर्हि दर्शनसम्भाषणे। एवम्भूते, रेवतीदर्शनसंकल्पं विहाय, किं भवन्तः फाल्गुनरायानेव न पश्यन्ति? मन्ये, तदुपकारकतरं भवेत्।

आश्विनश्रेष्ठी:—आम्, एतत्तवापि कथनं समुचितम्। तत्रैव गच्छामि। अपि करिष्यसि मयि अनुग्रहमेकम्? यावदहं प्रतिनिवर्ते श्रावय तां सर्वं यथावत्, कुरु मम समर्थनं च। ध्रुवमपनेष्यामि तत्, यत्तस्या मनसि समुद्भूतम्। किन्तु, तारके! अपि सम्यगिदमाचरितं रेवत्या?

गीतम् ('भारगमूं कोन 'वत्)

सदया ननु कोमलमतिः सा रेवती। शोभते किमतिनिष्ठुरेयं तरङ्गितिः? ॥ ध्रु० ॥ शठवचनं, श्रुतिगरलं, मत्वा सरलम् ॥ कुपितमना अदर्शना, संहरति प्रेम ॥ १ ॥

तारका—अत एव ब्रवीमि फाल्गुनरायान् दृष्ट्वा आगच्छतु भवान्। अहमपि स्वामिन्या मनसः परिवर्तनार्थं यते।

आश्विनश्रेष्ठी—बाढम्। इदमपरमपि तस्यै निवेदय मद्वचनात् 'परास्तः

रेवती—अयि किं तैरभिहितम् ?

तारका—महता कष्टेन प्रतिनिवृत्ताः। गच्छद्भिश्च तैर्विज्ञापितास्मि भवतीनां पुरस्तात्तेषां समर्पणम्। कथितं च तैः 'अकारणमेव त्वद्विषयकः संशयो ममासीत्। तदनुतप्तोऽस्मि' इति। यदा च मया निवेदितं सुस्पष्टं 'न स्वामिन्याः दर्शनं भविष्यति' इति, अतीव दुःखितास्तदा अभवन्। गच्छतां च तेषां मुखभावः परमपीडासूचक आसीत्। 'त्वं तावन्मत्कृते समर्पणं कुरु' इति प्रार्थितवन्तश्च।

रेवती—एतेषां तावदेव निवेदयसि। फाल्गुनरायैस्तु तथा कथितम्। तत्सम्प्रति किं मया करणीयम्?

तारका—मन्ये, न परनिवेदनानि प्रत्ययनीयानि। तदपेक्षया फाल्गुनरायस्य कुटुम्बिनीं दृष्ट्वा यदि भवती पृच्छां कुर्यात्, तदा सर्वमतन्निर्णीतं स्यात्। अन्यच्च, आश्विनश्रेष्ठिनोऽपि तत्रैव इदानीं गमिष्यन्ति। तत्प्रत्यक्षीकर्तुं समप्रमेव इमं प्रकार, साधुरयमवसरः। ईदृशेषु विषयेषु वरं प्रत्यक्षदर्शनम्, यतो जायते संशयनिवृत्तिः।

रेवती—साधिद ते मन्त्रितं मे प्रतिभाति। तद्गच्छ। मम त प्रावरकमानय यथा परयाम्यहमार्यो कृत्तिकाम्। (निष्क्रान्ता तारका।) आम्, यदि संशयादेव केवलमपगमयिष्यामि अहम् आश्विनश्रेष्ठिनम्, यावज्जीवं तदा दह्यमाना तिष्ठेयम्। (प्रविशति तारका।) अप्यानीतः? देहि तावदितः। (प्रावृणोति।) यदि कदाचित् अम्बया प्रश्नः क्रियेत 'कुत्र गतेयम्' इति, कथय 'फाल्गुनराय निवासं गत्वा शीघ्रम् आगमिष्यामि इति कथयित्वा गताः,' इति। (निष्क्रान्ता।)

---

## द्वितीयः प्रवेशः।

(रेवत्या गृहम्।)

(ततः प्रविशति मघा तारका च।)

मघा—अयि तारके! कुतः स्वस्विय गता? अः परस्तादिनाच्च महान् सम्भ्रम उत्पादितः, अनया कन्यकया।

तारका—आसीत्सम्भ्रमः समुद्भूतः। अधुना तु शान्तप्राय एव। तदर्थमेव ता बहिर्गताः।

मघा—किन्तु, यावदहं जीवामि केन पुनरुपदिष्टं कन्यकायाः मे एवमनुचितमाचरणम्? ननु नर्तितवती माघमेकं 'आश्विनश्रेष्ठी आश्विनश्रेष्ठी' इति जपन्ती। तदानीमेव कथितं मया। किन्तु, चिन्तितं तावत् 'एका एव इयं मे कन्यका। वसतु यथेप्सितं तेषां संनिधौ' इति। इमानि तु द्वित्राणि दिनानि तैः कलहायते इति श्रूयते मया।

तारका—न तादृशं किंचित्। मधुर एव कलहप्रकारः।

मघा—अथ यः स फाल्गुनरायः कुतस्तामागतः, ह्यः?

तारका—न तद् विदितं मम। किन्तु, 'तेषां गृहं गत्वा आगच्छामि' इति उक्त्वा आर्या गता।

मघा—तस्य गृहं गता? तद् गच्छ। प्रथमं तावत् प्रवहणस्य सज्जीकरणमादिश। नैकवारं कथितं तस्यै दुर्जातायै 'ईदृशं नर्तनम् इतस्ततो न युक्तम्'। इति। सा तु सदैव आत्मनश्छन्दानुवर्तिनी। नैतन्मे रोचते। गच्छ त्वम्।

तारका—गच्छामि। इदानीमेव आगमिष्यति आर्या इति-

मघा—त्वं तावत्प्रवहणं सज्जीकारय। अभ्यन्तरं गत्वा, इयम् आगच्छामि।

---

## तृतीयः प्रवेशः।

( स्थलम्-फाल्गुनरायस्य निवासः। )

( ततः प्रविशति भाद्रव्यः। )

भाद्रव्यः—ह्यः आरम्भो जातः। न घटिकामात्रमपि विश्रमो लब्धः। इतो धाव, ततो धाव। एतत्तत्र देहि, तं संदेशं निवेदय। सत्यं वद। असत्यं भाषसे। इति एवमतिमहान् सम्भ्रमः खलु प्रवृत्तः। बहवः स्वामिनो दृष्टा अद्ययावत्। अयं तु चित्र एव प्रकारः। अरे! कोऽप्यागत इव। को नु? इयमस्मद्स्वामिनी। तदन्तिममेव मे श्रुतिमिदम्। भर्ता रेवती च मिथो मन्त्रयेते तत्र कक्षे। यदि ज्ञातम् एतत्तस्यास्वामिन्याः तदा

तद्विनिर्याण एवस्यात् । नान्यत्किंचन वचनम् । इत एव आगता इयम् । भर्त ! भर्त !

फाल्गुनराय:—(द्वाराभ्यन्तरत' पश्यन्) किं रे ! क आगत । अपि सा प्राप्ता ?

भाद्रव्य'—आम्, भर्त !

फाल्गुनराय —मा तावत्कथय 'रेवती वर्तते अभ्यन्तरे' इति।

भाद्रव्य —यदि पृच्छेयुस्तर्हि कथनम्। अथ तु अञ्जसैव अभ्यतर प्रविष्टा स्युस्ता, तर्हि ! एता प्राप्ता एव ता । द्वार तावदावियताम्) (फाल्गुनरायस्तथा करोति ।) अतिरभसा आगच्छन्ति । कुत्र खलु गता आसन् ?

कृत्तिका—भाद्रव्य, अपि सन्त्येते, अभ्यन्तरे ?

भाद्रव्य —सन्तीति भाति।

कृत्तिका—अन्यदपि कश्च कश्चन सनिधौ ?

भाद्रव्य —न हि न हि । न कोऽपि स्वामिनि ! भर्तैव केवल पत्र लिखन्नु पविष्ट । आदिष्टश्चास्मि 'मा कचन अभ्यन्तर प्रवेशय' इति।

कृत्तिका—ननु नाहमभ्यन्तर प्रविशामि । मुखेनैव सेव्यता रह सगत तैरपि।

भाद्रव्य—(स्वगतम्) एवम् ? कथमेताभिर्ज्ञातम् ! (प्रकाशम्) न रह' सगतम्, स्वामिनि ! किमपि लिखन्त' पठन्तश्च उपविष्टा ।

कृत्तिका—अहो असत्य भणित क्षणार्धे ! सप्रति भण सत्य वा, मिथ्या वा। किं तेन मम ? त्रुटित सम्बन्ध प्रशान्त कलह '। अहमेव गृहमिद स्वकन्या गमिष्यामि। निवेदय तेभ्यो मद्गमनम्। कथय च ' स्वैरमिदानीं प्रवर्त्यताम्। न मयि मिच कोऽप्यन्तरायो भविष्यति।' इति मे सदेश तेभ्य । (निष्क्रान्ता।)

(फाल्गुनराय रेवती च बहिरागच्छत ।)

रेवती—सम्प्रमाश्रमायां कृत्तिकाया कथयितुमिच्छामि।

फाल्गुनराय—मा मैवमिदानीं क्रियताम् कृपया।

रेवती—यदि भ्रममात्रेण भ्रमदितयेन वा सर्वे निःसंशयं संपद्येत, तदा कुतः प्रत्यवायमुत्पादयति भवान्?

फाल्गुनरायः—कुत इति मा पृच्छ। सहस्रं कारणानि। यदि सा त्वामस्मिन्गृहे पश्येत्, सुमहाननर्थो यः समुद्भवेत्, न असौ आकलितस्त्वया। ननु कुतर्कशतकानि सोऽस्थापयिष्यति। तद्यावत्त्वमत्र स्थाः, न तावत्प्राणा मे सुरक्षिताः। अथ कुतस्तवापि निर्बन्धः, एतावान्?

रेवती—यो भवारोपः आश्विनश्रेष्ठिनि कृतः, अपि स सत्यः, असत्यः वा, इति निर्णेतुमिच्छामि। नान्यत्किंचन कारणम्।

फाल्गुनरायः—*अस्य विवरणार्थे कुतस्तस्याः आवश्यकता? अहं विवृणोमि।* अपि, अत्र प्रमाणादनन्तरं प्रमाणानन्तरम् इत्यस्ति प्रमाणपरम्परा। त्वामहं दृष्टवान्। तदनन्तरं मम गृहे, तस्याः कक्षे, निगूढं तमहमपश्यम्।

रेवती—ननु तासां कक्षे?

फाल्गुनरायः—आम्, आम्, न यस्मिन्कस्मिंश्चिदपि कक्षे, अपि तु शयनकक्षे। तद् श्रूयताम्।

रेवती—कुत्रोऽत्र अवकाशः किमपि भणितुम्? अपि तु, सत्यमिदम्?

फाल्गुनरायः—'सत्यमिदम्?'—एते मन्नयने, अयमहं च। साक्षात्त दृष्टवान्, तेन सभाषितवान्, उपहसितवांश्च तम्। अपि जातः प्रत्ययः? तस्या एव दास्या रोहिण्या स निगूढ आसीत् कक्षे, अर्थात् स्वामिन्याः मन्त्रमनुसृत्य। कियदधिक प्रमाणं त्वया इष्यते?

रेवती—ननु दीयतां यावदधिकं स्यात्।

फाल्गुनरायः—न संप्रति। पुनः कदाचन दास्यामि। संप्रति भाद्व्यस्त्वां गेहं प्रापयितुमागमिष्यति। गृह गच्छ तेन सार्धम्। यदि कदाचित् *आवामेकत्र पश्येत्सा, अकारणमेव-( श्रुत्वा ) आगता, आगतेव सा।* गच्छ त्वम्।—कुत्र नु भाद्व्यो गतः?

रेवती—यदि सत्यमिदं सिद्धं स्यात्, अणुमात्रो य आशाया अवकाशोऽभवत्, सोऽपि विनष्टप्रायो भवेत्। ( निःश्वसिति। )

मघा—(नेपथ्ये) भो अस्ति मम कन्या रेवती तत्र गृहाभ्यन्तरे? अप्यस्ति भोः?

रेवती—आः। माता मे माता। तां प्रति भणत 'न सा अत्र' इति। अपि च निगूहन्तु मां भवन्तः कुत्रचित्, प्रथमम्। अपि गच्छामि तं कक्षम्?

फाल्गुनरायः—प्रथमः कल्पः। आत्मनो गूहनार्थं चोरस्य रक्षकालयं प्रति धावनमेवैतत्। माता ते तमेव कक्षं प्रस्थिता।

रेवती—यदि तावत् उपरितनं कक्षं गच्छेयम्?

फाल्गुनरायः—ननु साधुतरोऽयं कल्पः। येन अनायासमेव मम भार्याया हस्ते पतिष्यसि। (श्रुत्वा) सोपाने पदरव इव श्रूयते। हा! हतोऽस्मि। सैवागता अधस्तात्। अथ इदानीं, भव, भव, तया पेटिकया अन्तरिता। भव अन्तरिता, शीघ्रम्।

रेवती—अतिसंत्रस्ता खल्वस्मि। यत्रेप्सितं भवन्त एव मामुद्धृत्य स्थापयन्तु। न मे चरणः उत्तिष्ठति (फाल्गुनरायस्ता हस्ताभ्यामुद्धृत्य स्थापयति।) अम्मो! किमत्र धूल्यामुपविशेयम्?

फाल्गुनरायः—शीघ्रमुपविश। (सा उपविशति।) एष प्रत्युज्जीवितोऽस्मि। काममायातु सा संप्रति। (प्रविशति कृत्तिका।)

कृत्तिका—एकं तावत् प्रष्टव्यम्। मातृगृहादानीतो मम कण्ठहारः आसीद् भवत्सकाशे—

फाल्गुनरायः—ततः किं तेन संप्रति? (प्रविशति मघा गृहाभ्यन्तरम्।)

मघा—भवन्तो गृहस्थाः। अहं पुनर्गणिका। विनैवानुज्ञां प्रविष्टा भवद्गृहमिति कुप्येयुः। किन्तु, नात्र उपायः कश्चन। मम कन्या रेवती अस्त्यत्र इति अवगतम्। तामन्वेष्टुमस्मि आगता।

फाल्गुनरायः—भवती ननु...

कृत्तिका—श्रूयतां महाराज! तथापि ज्ञातमिदम्।

मघा—यद्यपि न मेऽवगतं कुतो हेतोः साऽऽगता इति, तथापि तादृशीं मुग्धां बालां विमोह्य भवन्तः स्वके गृहे स्थापयन्ति, इति पापिष्ठमेतत्।

फाल्गुनरायः—भोः केन तु कथितमेवद् मन्मया सा स्वके गेहे स्थापिता इति? कथमसदृशमिदम् अहं कुर्याम्?

कृत्तिका—न हि न हि, विपरीतमेव। साधुपुरुषा एते, न कदापि ईदृशमाचरेयुः। नूनमस्ति एतैरेव विमोहिता भवत्याः कन्या।

मघा—अपि सत्यमेतत् ?

फाल्गुनरायः—अलमेतेन । सर्वथा असत्यमेतत् ।

कृत्तिका—सत्यमेव कथयामि । आर्ये! भवत्याः कन्या गृहे संस्थाप्य, निर्वासयितुकामा एते मां गृहात् ।

फाल्गुनरायः—किमस्या भाषितं शृणोति भवती ? भ्रान्तमस्या चित्तं संप्रति । भ्रमपरवशा यद्वा तद्वा प्रलपति ।

कृत्तिका—भ्रान्ता भवन्त एव रेवतीहेतोः । कुतोऽहं भ्रान्ता ?

फाल्गुनरायः—( दृष्ट्वा ) कुतः ? ननु पश्य, ते इमे आगच्छन्ति । एतेषां हेतोः । ( अत्रान्तरे प्रविशति आश्विनश्रेष्ठी । )

मघा—समीचीनं जातम् । परमेश्वर एव प्रसन्नः । उचित एव क्षणे प्राप्ता भवन्तः ।

फाल्गुनरायः—( भार्यां प्रति ) अपि न ते परमेश्वरः प्रसन्नः ? ननु भणामि ते इमे तव-तव आश्विनश्रेष्ठिन. ।

आश्विनश्रेष्ठी—भोः फाल्गुनराय ! नाहं निभृतमागतः । प्रकाशमेव प्राप्तोऽस्मि । कुत इति चेच्छ्रूयताम् । एतेषां सर्वेषां समक्षं भवता पैशुन्यमधिकृत्य भवत्सकाशात् प्रतिवचनमधिगन्तुम् ।

फाल्गुनरायः—तत्र कुत एव 'प्रकाशम्' आगमनस्य आवश्यकता ? अस्ति एव असौ शून्यः कक्षः । प्रविशन्तु भवन्तः । बहिस्तालकं निधातुमस्त्येव रोहिणी ।

कृत्तिका—ननु जिह्वा भवतामपक्षीणा पतिष्यति, यदि ईदृशं कुत्सितं वचनं पुनर्भवद्भिरुच्चार्येत । किं तावद् भणन्ति ? 'अस्ति असौ शून्यः कक्षः' । इति हतकायास्तस्या रोहिण्याः प्रमादात् मयि विपरीत एष आरोपः कुतो नाम ?

फाल्गुनरायः—यत्तावत्तत्रैव मन्त्रमनुसृत्य विहितं, तत्र को रोहिण्याः प्रमादः ? वराकी सा, स्वामिन्या आदेशपरवशा ।

मघा—किन्तु, किं मे कलहेनानेन ? आगतास्मि कन्यायाः कृते । आगतास्ति सात्र गेहे, नास्ति वा इति कथ्यताम् ।

फाल्गुनराय —अस्मिन्गेहे ? अस्माकं गेहे ? नात्र ईदृश्यो गणिकाकन्यका आगच्छन्ति । नास्ति तया मे परिचयोऽपि ।

कृत्तिका—नास्ति परिचय ? सुष्ठु तावत्, ताम् अङ्के निधाय उपविष्टा । अपि नास्ति तया मे परिचयोऽपि ' इति कथयन्तो भवन्तो न लज्जन्ते ?

मघा—अङ्के विधाय ! इति किमेतत् ? कथ्यतां तावत् । कदा ? क्व वा ?

कृत्तिका—' क्व ' इति, तत्र वृक्षस्याधः । एतानेव पृच्छतु भवती । कथयिष्यन्ति एते । ननु ' यस्यैव दुष्कृति, तस्यैव प्रायश्चित्ति ।'' तत्कुतोऽहमुच्चारये ?

फाल्गुनरायः—अहो ! कीदृशी अभिदा भार्येयमिति दृश्यताम् ।

मघा—आस्तां तत् । कदा न्वङ्के निहिता ?

कृत्तिका—कथयाम्यहम् । ह्य प्रभाते, तस्य आम्रवृक्षस्य अधस्तात्—

आश्विनश्रेष्ठी—मा मा, मैव मत्वा । आर्ये कृत्तिके ! नितरामलीकमेतत् । भणामि शपथपुर सरम्—

फाल्गुनराय —अहमपि इष्टेन शप्त्वा कथयामि, यन्नात्र अक्षरमपि सत्यम् ।
(आश्विनश्रेष्ठिन समीपं गत्वा मन्दस्वरं सल्पति ।)

कृत्तिका—ज्ञातम् । चोरोऽय चोरेण सङ्गत । द्वाभ्यां ननु युवाभ्यां कूटमिदं रचितम् ।

फाल्गुनराय —आर्ये ! किमेषा कथयति ? किंच भवती शृणोति ? वस्तुत न पथिकोऽपि मनसि सशयमकरिष्यत् ।

आश्विनश्रेष्ठी—तत्र वृत्ते सशयो नाम महत्पापम् ।

कृत्तिका—किं भवती एतयोर्वचन शृणोति ? शठौ उभावपि ।

आश्विनश्रेष्ठी—ननु दृश्यताम् । रेवती मार्गे मूर्च्छिता पतिता । सा चैतै सधृता फाल्गुनरायेण समाश्वासिता च । अप्ययमपराध एतेषाम् ?

मघा—कुतोऽत्र अपराध ? अपि उपकार अपराध उच्यते ? अवगत तन्मम । गृहं प्राप्ता अपि सकृन्मूर्च्छिता सा ।

फाल्गुनरायः—ननु भवती एव पश्यतु । इयं च अस्माकं प्राणतमा एव भणति ।

आश्विनश्रेष्ठी—भो कथयामि तावदहम्। रेवती ईषद् गर्विता, अतो न तथा मे सवाद। अन्यथा, आचारम् अन्तरेण तावत्, न सुगृहिणी अपि ता दूषयितुमुत्सहेत।

फाल्गुनराय.—समीचीनम्। सर्वथा युक्तमेतत्। आर्ये! कथ्यताम्। अथ भूतार्थ। तद्‌श्रूयताम्, अस्मिन् प्रकरणे को मे दोष?

कृत्तिका—अपि समग्र एव भूतार्थ? कुत इदानीम् एतन्निगूह्यते? तच्चित्र यत्तया भवते समर्पितम्—

फाल्गुनराय.—तया मह्य समर्पितम्, अथवा *आश्विनश्रेष्ठिभिरेतैस्तुभ्यम्* उपायनीकृतम्?

कृत्तिका—श्रूयन्ता श्रूयन्ताम्, आश्विनश्रेष्ठिन्! तानि इमानि मुक्ताफलानि एतेषामोष्ठशुक्तित विनि सृतानि।

आश्विनश्रेष्ठी—फाल्गुनराय! इद तावत्सुतरामसत्यम् अभिधीयते भवता। नैव मया चित्रमेतास्यो दत्तम्।

फाल्गुनराय—इद भवता सुतरामामश्रीकमुच्यते। भवता दत्त तस्यै चित्रम्, चुम्बित तदया, साक्षादवलोकित तन्मया, तदनन्तर च आच्छिन्न तन्मया तस्या हस्तात्।

आश्विनश्रेष्ठी—एतदपि असत्यम्। तच्चित्र मया रेवत्यै दत्तम् आसीत्। सा मूर्च्छिता। तदा तस्या हस्तात्किनि सृतम्, तद् भवता कुटुम्बिन्या प्राप्तम्।

कृत्तिका—आम्, एवंवृत्तमिदम्। किं निरर्थकेन असत्यकथनेन? मया तच्चित्र वृक्षस्याध प्राप्तम्।

आश्विनश्रेष्ठी—श्रूयताम्। अपि जात प्रत्यय?

फाल्गुनराय—आस्ता तावदिद चित्रप्रकरणम्। तत्र भवता कथन मन्येय नाम प्रमाणम्। कि तु, मत्र त अस्या शयनगृहे निगूढ स्थिता। क्रियता तत्र प्रत्युत्तरम्। ननु पृच्छन्ति भवन्त 'अपि जात प्रत्यय?' इति।

कृत्तिका—किं तत्र प्रत्युत्तरम्। अपि न कथित प्रागेव 'स तस्या रोहिण्या प्रमाद' इति। कथमेतेषां तेन सम्बन्ध? एतन्नाम 'सुवर्णाया कण्ठे

अपहृतो हारः । वराक्याः सरलायाः कपाले तु लगुडप्रहारः' इति यदुच्यते। कोऽर्थः एवमाचरितेन !

मघा—मन्ये फाल्गुनराय! सकल एव भवतः संशयः भवन्तम् एव बाधितवान् । एवमेव भवतः कुटुम्बिन्याः । कुतस्तु इमं पराक्षापणव्यापारमङ्गीकुर्याम्? तथापि यन्मे सत्यमभात्, तत् कथितं मया। आर्यया अनया मम कन्यायाः नाम तावदकारणमेव प्रोतमत्र।

कृत्तिका—अप्यकारणमेव प्रोतम्? अहमेव तर्हि असत्यभाषिणी । युक्तमेवेदमपि । 'काकेषु बकः, सोऽपि काकः' । यःकश्चन आगच्छति एतैःसङ्गच्छते । सङ्गच्छेरन्नाम । इयमहं प्रस्थिता प्रातरं प्रति ।

फाल्गुनरायः—महता प्रमोदेन गमिष्यसि भ्रातुर्गृहम्, न त्वहम् अनुजानीयाम् । (तां निरुणद्धि ।)

कृत्तिका—तर्हि मां कूटयन्त्रे निक्षिप्य रुणद्धि भवान्?

फाल्गुनरायः—आम्, रुणध्मि ।

कृत्तिका—अपि भवतः पत्नीत्वं नाम पापं मयाऽऽचरितम्?

फाल्गुनरायः—अर्थात् ।

कृत्तिका—नास्ति तर्हि मे तिलमात्रापि स्वतन्त्रता?

फाल्गुनरायः—न तिलमात्रापि ।

कृत्तिका—तत्कि यावज्जीवम् एवमेव पीडयिष्यति मां भवान्?

फाल्गुनरायः—कोऽत्र संशयः?

कृत्तिका—युक्तमेतत् । 'गोत्रे रोहिणी, गेहे गृहिणी,' 'यावज्जाग्येत, तावज्जाग्येत' ।

मघा—अस्तु फाल्गुनराय! सत्यमेव न मे कन्या अत्रागता?

फाल्गुनरायः—ध्रुवमेव नागता । अपि सत्यामपि तस्याम्, अनन्वेषम् अहम्? यदीप्सते परन्तु भवती, अस्ति या सा क्वचन निगूढा इति । (अत्रान्तरे रैवत्याः कासध्वनिः श्रूयते ।)

आश्विनश्रेष्ठी—अपि नेदानीं कस्यचित् कासध्वनिरिव श्रुतः?

फाल्गुनरायः—(सगर्वम्) हन्त! हन्त! पातः संवृत्तः । पातः संवृत्तः, महान्खलु पातः संवृत्तः ।

आश्विनश्रेष्ठी—भो अपि न भवद्भिः श्रुतः ?

फाल्गुनरायः—तत्र सा रेवती-न रेवती-रोहिणी परस्तात् कार्यमम्‌मा। तया स्यात्काथितम्।

कृत्तिका—रोहिणी ! कथं रोहिणी कासेत ? सा खलु मया कार्यार्थे बहिः प्रेषिता।

फाल्गुनरायः—यदि न रोहिणी, भाद्व्यो भवेत्।

कृत्तिका—नायं भाद्व्यः। स्त्रियाः स्वरोऽयम्।

फाल्गुनरायः—कुतः स्त्रियाः ? कस्य स्त्री पुनरत्रागता ? भाद्व्य एवासौ।

कृत्तिका—तस्याः पेटिकाया आगतः शब्दः। पश्यामि तावत्। (फाल्गुनराये 'ननु भणामि' 'अपि भणामि' इति वदति, गच्छति कृत्तिका। कासमाना च तिष्ठति रेवती।)

कृत्तिका—अपि दृष्टः अयं भाद्व्यः ? वत्स भाद्व्य ! पुरस्तावदेहि। (तां धृत्वाऽऽनीय) भो रेवती नामधदत्र नु ? तत् किमाकाशादवतीर्य पेटिकायाः परस्ताद्गता सा ?

(प्रविश्य)

भाद्व्यः—(स्वगतम्) सर्वोऽप्ययं मन्त्रो गले पतितः। आकुलीभूतं च सकलमपि तन्त्रम् ? न जाने कुतोऽस्याः काशोऽयम् अकस्मादेव उत्थितः।

कृत्तिका—अयि वद। मम पतिदेवेन समाहूता, अतोऽत्र आगता नु त्वम् ?

रेवती—स्वयमेव अहमागता। न फाल्गुनराय-महोदयानाम् अत्र लवमात्रापि प्रेरणा।

कृत्तिका—कुतस्त्वमत्र आगता ?

रेवती—दम्पत्योर्युवयोर्मौर्ख्येण बाधा मे आरब्धा।

कृत्तिका—न मम। एतेषां मम गृहपतीनामव्यापारेषु व्यापारेण। आश्विनश्रेष्ठिनि एतेरकारणमेव मिथ्यारोपः कृतः।

आश्विनश्रेष्ठी—ननु सत्यमेव स फाल्गुनरायाणामेव 'अव्यापारे व्यापारः'। ननु आर्ये ! कुत इय रेवती अत्र आगता, कस्माच्च पेटिकायाः परस्तात् निगूढमुपविष्टा, इत्यस्य स्पष्टीकरणम् आवश्यकम्।

रेवती—कुत इद परोक्ष शरसन्धानम् ? इयमह कथयामि । तच्चित्र भवता कृत्तिकादेव्यै दत्तम्, इति कथित मे, एतैः फाल्गुनरायै । न तु तस्सत्यमभान्मे । अत 'आर्या कृत्तिका दृष्ट्वा सशयस्य अस्य निराकरण लभेय' इति हेतोरत्र आगता । किन्तु मात ! न एता गृहेऽभवन् । अतो मुहूर्तमत्र स्थिता । अत्रान्तरे त्वमागता । भीता चाहमत्र निगूढमुपविष्टा ।

आश्विनश्रेष्ठी—नात्र मह्यदनुचित किंचिद् दृश्यते ।

मघा—किन्तु, जाते ! कुत सत्यात् भयम् ? यदि गृह एव मह्यमकथयिष्यः, अहमेव आगत्य आर्यां कृत्तिकामेनाम् अद्रक्ष्यम् । किन्तु किं तेनाधुना ? अपि निरस्तः सर्वथा सशय: ?

आश्विनश्रेष्ठी—मम तावन्निरस्तः ।

रेवती—मम तु आदौ सशय एव नासीत्तादृश ।

मघा—भोः फाल्गुनराय ! अपि जात सकल सशयनिरसनम् ?

फाल्गुनरायः—कथ निरसन जायेत ? आगम्यताम् । अह भवत्यै सर्व वृत्तान्त कथयिष्यामि । न त्वस्याः समक्षम् । इतस्तावदागम्यताम् । (ता नेतु प्रारभते ।)

कृत्तिका—कुतो न मत्समक्षम् ? आर्ये मघे ! मयापि एतेषां बहूनि कपटानि निवेदनीयानि । अहमप्यागमिष्यामि । (सापि निष्क्रान्ता ।)

मघा—(गच्छन्ती) इयमहमागता । आश्विनश्रेष्ठिनः ! अप्यत्रैव स्थिता:, नु ? (सर्वेऽपि निष्क्रान्ताः ।)

(रेवती आश्विनश्रेष्ठी च परस्परपराङ्मुखौ तिष्ठतः ।)

रेवती—न ईदृश. प्रमादो नाम पुनर्मया क्रियेत ।

आश्विनश्रेष्ठी—नाहमीदृश सशय पुनर्मनसि कुर्याम् ।

रेवती—सत्यमेव मया मूढया इव आचरितम् ।

आश्विनश्रेष्ठी—अहमपि मूर्ख इव वर्तितवान् ।

रेवती—भवतु । यद् वृत्त न तत्परावर्तनीयम् । किं तेन सम्प्रति ?

आश्विनश्रेष्ठी—आम्, सम्प्रति पुन. किं कार्यम् ?

रेवती—अथ तु मौन कियन्त काल प्रचलिष्यति ?

आश्विनश्रेष्ठी—किन्तु 'त्रि ' 'षड्' इत्यनयो. अङ्कयो कथम् आभिमुख्य सेत्स्यति ।

रेवती—येन प्रारब्धो त्रि-सवाद, तेन विधीयता सवाद । यदि इष्ट तथा मन्यते । नाह त्यजामि मौनम् अन्तरेणैव क्षमायाचनम् ।

आश्विनश्रेष्ठी—न च मुखान्मे अक्षरस्याप्युच्चारणम्, यावत् न जाने कथ विधेय क्षमायाचनम् ।

रेवती—किं तत्र विधेयम् ! न क्षमायाचन नाम पादयो पतनम् । केवल 'प्रमादो मे जात, प्रमादो मे जातः' इति कथनीयम् ।

आश्विनश्रेष्ठी—'प्रमादो जात, क्षमस्व ।' इति दशकृत्व उक्तम्, तथापि नाकलन, न क्रोधस्य अपगमन वा । तत्र किं करणीयम् ।

रेवती—यथा दशकृत्व भणित, तथैव पुनरेकवारम् ।

आश्विनश्रेष्ठी—(मुख परावर्त्य) रेवति ! एतस्मिञ्ज्ञाते, किमेकवारम् ननु शतवारम् ।

रेवती—जात आरम्भः ।

आश्विनश्रेष्ठी—रेवति !

रेवती—(मुख परावर्त्य) प्रियकर ! प्राणपते !

आश्विनश्रेष्ठी—अहो मोद । वृथा मया त्वद्विषयको मिथ्यासशयो मनसि कृत । प्रमादो मे जात । प्रमादो मे जात ।

रेवती —(हसन्ती) ननु अलम्, अलम्, अलम् ।

आश्विनश्रेष्ठी—भो हर्षित, हर्षितमनया । अपि सर्वं समधिगतम् !

रेवती—यावन्न तच्चित्र दत्तम् तावत्कथ सर्वम् अधिगतम् ।

आश्विनश्रेष्ठी—गृहाणैतच्चित्रम् । (प्रयच्छति ।)

रेवती—अन्ते भवानेत्र पराजित । मत्रानादौ उक्तवान्, पश्चादहम् ।

आश्विनश्रेष्ठी—अयि आवयोरनावकलहे ममैव पराजयोऽनिशं भविता ।

(अत्रान्तरे फाल्गुनराय, मघा, कृत्तिका च हसन्त प्रविशन्ति ।)

फाल्गुनराय —इदानीं हि आत्मनो मूढताम् अहमेव उपहसामि । तत्र अस्यास्तावन्मूढता सविशेषमुपहसनीया ह्यय, कथयामि, आश्विनश्रेष्ठिन् !

सुमहदिदमाश्चर्यं, यदेवमतिस्फुटमपि वस्तु न आकलितमस्माभिः । आवयोस्तावन्मध्ये या खलु 'सा' अभवत्, नूनं महाननर्थस्तया कृतः ।

आश्विनश्रेष्ठी—भवता 'सा' इत्यनेन आर्या कृत्तिका अवगता ।

फाल्गुनरायः—भवता च 'सा' इति रेवती ज्ञाता । समेत्य उभाभ्यामपि आवाभ्यां तदानीं चतुरकपानं कृतमासीत् । इदं च अपरम् । (हसन्तौ मिथो मन्दस्वरं भाषेते ।)

कृत्तिका—रेवति ! सत्यमभणत्तत्सर्वथा अवितथम् । अनया तव अम्बया स्नुषागमेन सर्वं बोधितम् । केन निमित्तहतकेन तदानीं शिरसि विकृतिर्जाता इति न ज्ञायते । एतावतां तु पञ्चैः प्रश्नैः सर्वोऽपि निर्णयो जातः ।

आश्विनश्रेष्ठी—फाल्गुनराय ! अपि नाहं भवद्भ्यः अकथयम् ? भवतो गृहे प्रथममेव सा अहमागच्छम् । ततः प्राक् नैकवारमपि मया पदमत्र कृतम् । न वा वाग्विनिमयो भवतः कुटुम्बिन्या ।

फाल्गुनरायः—सर्वं तदाकर्णितं मयेदानीम् । भो उभे-रिपनायाः सखाया-धित्यकायाः प्रधमानः पुरुषो महाऽघोषः सरति, तदा तस्य पातस्य न भवति सीमा काचन । यद्वर्णकं हि उपनेत्रं, तद्वर्णकमेव दृश्यम्, इत्येतदेव सत्यम् ।

रेवती—तत्र प्रथमं भवता, पश्चान्मया।

मघा—सर्वोऽयं चित्रेण कृतः सम्भ्रमः। अस्तु, यद् वृत्तं न तत्पुनरावर्तेत। अतःपरमपि तावत्सर्वैः सावधानं वर्तितव्यम्। यथा न काचन हानिः स्यात्। (विरागी नेपथ्ये 'हृदि हि धर त्वं बोधं सत्यम्' इत्यादि गीतं गायति। तदनन्तरं प्रविश्य)

विरागी—अपि प्रतीता न वा मम बोधस्य सत्यता भवद्भिः? इदानीमपि कार्तिकनाथस्य दीपोत्सवार्थं दानं दद्युर्न वा भवन्तः?

फाल्गुनरायः—अस्या द्रोणीमिततैलेन सार्धं ममापि तावन्मात्रकं प्रेषयामि। अस्मिन् शुभे अवसरे, इयमेव नः प्रार्थना भगवतः कार्तिकनाथस्य चरणयोः—

(सांघिकं गीतम्)

चिन्मयं, सकलहृदयं, सदयं, याचे गोविन्दो, वरं वरदं, कलिमलविलयम्॥ ध्रु०॥ विषयपिपासापीडित इव, निःसारे संसारे मृगनीराभे, मूढोऽहं भ्रान्तो, विस्मृतस्त्वद्भजनामृत-पानम्॥ १॥ कामघनाशा खलु विवशा, मन्नाशे कृतचेताः। संयमितं तत्पाशैः, द्रुतमेहि त्वं, मोचयितुं जनमेनम्॥ २॥ सुखमनिशं, यत्र नवं, पापानां, तापानां न च लेशो, शान्तिगृहं, नय तत्स्थानं, सुखभुवनं, दासमिमम्॥

समाप्तः पञ्चमोऽङ्कः।

इति समाप्तमिदं 'सङ्गीत-संशयकल्लोलम्' नाम नाटकम्।

---

## सङ्गीत-संशयकल्लोले ग्रथितानि

# सुभाषितानि ।

रेवती—तत्र प्रथम भरता, पश्चान्मया।

मया—सर्वोऽयं विशेष कृतः संभ्रमः। अस्तु, यद् वृत्तं न तत्पुनरावर्तेत। अतःपरमपि तावःसर्वैः सावधान वर्तितव्यम्। यथा न काचन हानिः स्यात्। (विरागी नेपथ्ये 'हृदि हि घर त्वं बोधं सदयम्' इत्यादि गीतं गायति। तदनन्तरं प्रविश्य)

विरागी—अपि प्रतीता न वा मम बोधस्य सत्यता भवद्भिः? इदानीमपि कार्तिकनाथस्य दीपोत्सवार्थं दान दद्युर्न वा भवन्तः?

फाल्गुनरायः—अस्या द्रोणीमितलैलेन सार्धं ममापि तावन्मात्रकं प्रेषयामि। अस्मिन् शुभे अवसरे, इयमेव नः प्रार्थना भगवतः कार्तिकनाथस्य चरणयोः—

(सांघिकं गीतम्)

चिन्मयं, सकलहृदयं, सदयं, याचे गोविन्दो, वरं वरदं, कलिमलविलयम्॥ ध्रु०॥ विषयपिपासापीडित इव, निःसारे संसारे मृगनीराभे, मूढोऽहं भ्रान्तो, विस्मृतस्त्वद्भजनामृतपानम्॥ १॥ कामघनाशा खलु विवशा, मद्याशो कृतचेताः। संयमितं तत्पाशैः, द्रुतमेहि त्वं, मोचयितुं जनमेतम्॥ २॥ सुखमनिशं, यत्र नवं, पापानां, तापानां न च लेशो, शान्तिगृहे, नय तत्स्थानं, सुरभुवनं, दासमिमम्॥

समाप्तः पञ्चमोऽङ्कः।

इति समाप्तमिदं 'सङ्गीत-संशयकल्लोलम्' नाम नाटकम्।

---

## सङ्गीत-संशयकल्लोले ग्रथितानि

# सुभाषितानि ।

